१७ १८ तथैव पुत्रादिमरणनिमित्तं आत्मवधार्थं प्रवृत्तो न म्रियेत चेत् त्रिरात्रमुपवासं चरेत् १९ जातिः ब्राह्मणत्वादिः श्रेणिः हस्त्यादीनां पंक्तिः अधिवासः जन्मभूमिः जात्यादिधर्मान् ये वर्जयन्ति तेषां धर्मः प्रायश्चित्तादिस्वरूपः न विद्यते २० पाठकाः सा

न्तदोषयेस्मिंस्तैस्तु प्रायश्चित्तैस्तु शाम्यति १७ उपवासमेकरात्रं दंशोत्सर्गेन राघिपः विशुद्ध्यदा
त्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः १८ तथैव शोकं प्रकुर्वाणो न म्रियेत यदा नरः शस्त्रादिभिरुपावि
ष्टः त्रिरात्रं तत्र निर्दिशेत् १९ जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः वर्जयन्ति च ये धर्मं
तेषां धर्मो न विद्यते २० देशावावेदशाम्नत्वाम्वघोवा धर्मपाठकाः यद्ब्रूयुः कार्यउत्पन्ने स धर्म्मोथ
मंसंशये २१ अनड्वान् सृत्तिका चैव तथा क्षुद्रपिपीलिकाः श्लेष्मातकस्तथा विप्रैरभक्ष्यं वि
षमेव च २२ अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः चतुष्पात्कच्छपादन्यो मण्डूका ज
लजाश्च ये २३ भासा हंसाः सुपर्णाश्च चक्रवाकाः प्लवा बकाः काको मद्गुश्च गृध्रश्च श्येनोलूक
स्तथैव च २४ क्रव्यादा दंष्ट्रिणः सर्वे चतुष्पात्पक्षिणश्च ये येषां चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्व
शः २५ एडकाश्वखरोष्ट्रीणां सूतिकानां गवामपि मानुषीणां मृगीणां च न पिबेद्ब्राह्मणाः
पयः २६ एतानि चैव यच्चान्यत् किंचिदनिर्दशं अभोज्यं चाप्यपेयं च येनाद्यं मम निर्दशं २७ ॥

पकाः विचार
काः इति यावत् कार्यप्रायश्चित्तनिमित्ते दोषे २१ अभक्ष्यानाह चतुर्भिः अनड्वानिति २२ २५ एडकामेषी सूतिकानामनिर्दशाह्ना

सूतिकान्नं

ति २८ अभोज्यापेयसंग्रहे ५ ॥

अवीरायाः पतिपुत्रहीनायाः २८ इंद्रियं शुक्रं गणिकादिस्त्रियाणामन्नं २९ दीक्षितस्य अग्नीषोमीयवपाहोमात्प्राक् अन्नभो
क्तव्यं कदर्यः धनव्ययभयाद्भोगत्यागहीनः ३० रक्षिणः ग्रामपालकस्य सीमादिरक्षिणो वा ३१ ३२ शोषितं कट्वायाद

राजान्नंतेजआदत्तेशूद्रान्नंब्रह्मवर्चसं आयुःसुवर्णकारान्नमवीरायाश्चयोषितः २८ विष्ठावार्द्धु
षिकस्यान्नंगणिकान्नमथेंद्रियं शुक्रंतियेचोपपतिस्त्रीजितान्नंचसर्वशः २९ दीक्षितस्यकदर्यस्य
क्रतविक्रियिकस्यच तक्ष्णश्चर्मावकर्त्तश्चपुंश्चलारजकस्यच ३० चिकित्सकस्ययच्चान्नमभोज्यं
रक्षिणस्तथा गणग्रामाभिशस्तानांरंगस्त्रीजीविनांतथा ३१ परिवित्तीनांपुंसांचवंदिद्यूतविदांत
था वामहस्ताहृतंचान्नंभक्तंपर्युषितंचयत् ३२ सुरानुगतशुक्तिसमभोज्यंशेषितंचयत् पिष्ट
स्येवतत्शाकानांविकाराःपयसस्तथा ३३ सक्तुधानाकरंभाणांनैवभोग्याश्चिरस्थिताः पायसं
कृसरंमांसमपूपाश्चवृथाकृताः ३४ अपेयाश्चाप्यभक्ष्याश्चब्राह्मणैर्गृहमेधिभिः देवानृषीन्मनु
ष्यांश्चपितॄन्गृह्याश्चदेवताः ३५ पूजयित्वाततःपश्चात्गृहस्थोभोक्तुमर्हति यथाप्रव्रजितो
भिक्षुस्तथैवस्वेगृहेवसेत् ३६ एवंवृत्तःप्रियैर्दारैःसंवसन्धर्ममाप्नुयात् नदद्याद्यशसेदानंन

त्वात्मार्थंरक्षितं ३२ धानाःभृष्टयवाःकरंभाःदधिसक्तवःसक्त्वादीनांविकाराःनष्टासक्ता भयान्नोपकारिणो ३० ॥
दयः ३३ कृसरंतिलमिश्रओदनः वृथाकृताःदेवताद्युद्देशंविनाकृताः ३४ चात्अपेयापीयूषादयः ३५ ३६ ३७ ॥

हासकेषु परिहासपरेषु भंडेषु ३८ वाग्घीने मूके मूर्खे वा ३९ ४० स्वहतो मुनकचर्ममये कोशे ४२ असूयकः गुणेषु दो-
षारोपं कुर्वन् अनुक्रोशात् दयया ४५ आम्नाचरितः इष्टकारीति बुद्ध्या धर्मबुद्ध्या वा निर्मंत्रेन देयमित्याह न वा इति ४५ अत्रै

नन्त्यगीतशीलेषु हासकेषु च धार्मिकः न मत्ते चैव नोन्मत्ते न स्तेने न च कुत्सके ३८ न वाग्घी-
ने विवर्णे वा नांगहीने न वामने न दुर्जने दौष्कुले वा व्रतैर्यो वा न संस्कृतः ३९ न श्रोत्रियमृते
दानं ब्राह्मणे ब्रह्मवर्जिते असम्यक् चैव यद्दत्तम् असम्यक् प्रतिग्रहः ४० उभयं स्याद् अनर्थाय दा-
तुरादातुरेव च ४० यथाखदिरमालम्ब्य शिलां वाप्यर्णवं तरन् मज्जेत मज्जते तद्वद्दाता यश्च
प्रतिग्रही ४१ काष्ठैराईर्यथा वह्निरुपशांतो न दीप्यते तपःस्वाध्यायचारित्रैरेवं हीनः प्र-
तिग्रही ४२ कपालेयद्वदापः स्युः श्वदृतौ च यथा पयः आश्रयस्थानदोषेण वृत्तहीने तथा
श्रुते ४३ निर्मंत्रो निर्व्रतो यः स्याद् अशास्त्रज्ञो न सूयकः अनुक्रोशात् प्रदातव्यं हीनेष्वव्रतिके-
षु च ४४ नैवं देयम् अनुक्रोशात् दीनानाथातुरेकेषु पि आम्नाचरितइत्येव धर्मइत्येव वा पुनः
४५ निष्कारणं स्मृतं दत्तं ब्राह्मणे ब्रह्मवर्जिते भवेद् अपात्रदोषेण न चात्रास्ति विचार-
णा ४६ यथा दारुमयो हस्ती यथा चर्ममयो मृगः ब्राह्मणश्चानधीयानस्त्रयस्ते नाम बिभ्र-

वहेत्वमाह निष्कारणमिति निष्कारणं निष्फलं दोषेण युक्तं इति शेषः ४६ ४७ ॥

२८

श्री॰
शां॰ रा॰
टी॰
७३

निराकृतौमूर्खे ४९ ५० ५१ षड्विंशः ३६ श्रोतं १ २ भक्ष्याभक्ष्यविवर्जिताउपवासात्मिका कौतूहलेनप्रसंगेनश्रुता।

ॐ यथाषंढोफलःस्त्रीषुयथागौर्गौर्विचाफला शकुनिर्वाप्यपत्रःस्यान्निर्मंत्रोब्राह्मणस्तथा
४८ ग्रामधान्यंयथाशून्यंयथाकूपश्चनिर्जलः यथाहुतमनग्नौचतथैवस्यान्निराकृतौ ४९ देव
तानांपितॄणांचहव्यकव्यविनाशकः शत्रुरर्थहरोमूर्खोनलोकान्प्राप्तुमर्हति ५० एततेकथितं
सर्वंयथावत्तंयुधिष्ठिर समासेनमहद्ध्येतच्छ्रोतव्यंभरतर्षभ ५१ इतिश्रीमहाभारतेशांतिराज
धर्मे ३६ युधिष्ठिरउ॰ श्रोतुमिच्छामिभगवन्विस्तरेणमहामुने राजधर्मान्द्विजश्रेष्ठचातु
र्वर्ण्यस्यचाखिलान् १ आपत्सुचयथानीतिःप्रणेतव्याद्विजोत्तम धर्म्यमालंब्यपंथानंवि
जयेयंकथंमहीं २ प्रायश्चित्तकथाह्येषाभक्ष्याभक्ष्यविवर्जिता कौतूहलानुप्रवणंहर्षंजनयती
वमे ३ धर्मचर्याचराज्यंचनित्यमेवविरुध्यते एवंमुह्यतिमेचेतश्चिंतयानस्यनित्यशः ४ वै॰
शंपायनउ॰ तमुवाचमहाराजव्यासोवेदविदांवरः नारदंसमभिप्रेक्ष्यसर्वज्ञानांपुरातनं ५ श्रोतु
मिच्छसिचेद्धर्मानिखिलेननराधिप प्रेहिभीष्मंमहाबाहोवृद्धंकुरुपितामहं ६ सतेधर्मरहस्येषु
संशयान्मनसिस्थितान् छेत्ताभागीरथीपुत्रःसर्वज्ञःसर्वधर्मवित् ७ जनयामासयंदेवीदि

प्रवणाश्रभिमुखा ३ ५ प्रेहिप्रयाहि ६ ८ ९ व्यात्रिपथगानदी साक्षाद्ददर्शयोदेवान्सर्वानिंद्रपुरो

७३

सवैयाख्यं व्याख्योसहितं ९ १२ १४ १५ विमुंचति विमोदयति ततः पुरा १६ १७ वैशसं विनाशनं १८ उपसंप्रष्टुं

उशना वेद यच्छास्त्रं यच्च देवगुरुर्द्विजः यच्च धर्मं सवैयाख्यं प्राप्तवान् कुरुसत्तमः ९ भार्गवा
च्च्यवनाच्चापि वेदानंगोपबृंहितान् प्रतिपेदे महाबाहुर्वसिष्ठाच्च रितव्रतः ११ पितामहसु
तं ज्येष्ठं कुमारं दीप्ततेजसं अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा १२ मार्कंडेयमुखात्कृत्स्नं
यतिधर्ममवाप्तवान् रामादस्त्राणि शक्राच्च प्राप्तवान् भरतर्षभः १३ मृत्युरात्मेच्छया यस्य जा
तस्य मनुजेष्वपि यथानपत्यस्य सतः पुण्यालोका दिवि श्रुताः १४ यस्य ब्रह्मर्षयः पुण्या नित्य
मासन् सभासदः यस्य नाविदितं किंचिज्ज्ञानज्ञेयेषु विद्यते १५ स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मा
र्थतत्त्ववित् तमभ्येहि पुरा प्राणान् स विमुंचति धर्मवित् १६ एवमुक्तस्तु कौंतेयो दीर्घप्रज्ञो महा
मतिः उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतं १७ युधिष्ठिर उ० वैशसं सुमहत्कृत्वा ज्ञातीनां रोमह
र्षणं आगस्कृत्सर्वलोकस्य पृथिवीनाशकारकः १८ घातयित्वा तमेवाजौ छलेनाजिह्मयोधि
नं उपसंप्रष्टुमर्हामि तमहं केन हेतुना १९ वैशंपायन उ० ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया
पुनराह महाबाहुर्यदुश्रेष्ठो महामतिः २० वासुदेव उ० नेदानीमतिनिर्बंधं शोके त्वं कर्तुमर्हसि
यदाह भगवान्व्यासस्तत्कुरुष्व नृपोत्तम २१ ब्राह्मणास्त्वा

पराभ्यसमयकप्रष्टुं १९ २१ नाथमानाः याचमानाः २२

धर्मगाउपग्रौ ६ ॥

महावाक्योतारक्षमुष्कैतसः पर्जनावास्विवस्थिता

हतेति उपासत इत्युत्तरत्रापि योज्यं २३ २४ २५ २६ विष्टरश्रवसा विष्णुना २७ संतापं शारीरं तापं २८ वाक्यानि वेद

हतशिष्टाश्च राजानः कृत्स्नं चैव समागतं वात्स्न्यं(?)र्येण महाराज राष्ट्रे ते कुरुजांगले २३ प्रिया
र्थमपि चैते च ब्राह्मणानां महात्मनां नियोगादस्य च गुरोर्व्यासस्यामिततेजसः २४ सुहृदा
मस्मदादीनां द्रौपद्याश्च परंतप कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु २५ वैशंपायन उ॰
एवमुक्तः स कृष्णेन राजा राजीवलोचनः हितार्थं सर्वलोकस्य समनुज्ञाप्य महामनाः २६
सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयं द्वैपायनेन च तथा देवस्थानेन जिष्णुना २७ एतैश्चा
न्यैश्च बहुभिरनुनीतो युधिष्ठिरः व्यजहान्मानसं दुःखं संतापं च महायशाः २८ श्रुतवाक्यः
श्रुतनिधिः श्रुतश्रव्यविशारदः ततः स मनसः शांतिमगच्छत्पांडुनंदनः २९ स तैः परि
वृतो राजा नक्षत्रैरिव चंद्रमाः धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ३० प्रविविक्षुः स धर्मज्ञः
कुंतीपुत्रो युधिष्ठिरः अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ३१

वयवाः निधिः तदर्थविचारग्रंथो मीमांसा अन्यदपि यत्श्रुतं श्रव्यं नीतिशास्त्रादि तत्र विशारदः ऊहापोहकुशलः व्यवस्य क
र्तव्यमर्थं निश्चित्य २९ ३० ३१ ॥

तत इति गोभिर्बलीवर्दैः एतस्मात् लिंगात् क्रम्यते यत्त्वं रथं प्रथमं गोरथेन प्रवेक्ष्यसि इति मंत्रलिंगादप्येतत्क्रम्यते सं गोभिरांगिरसो
नक्षमाणो भग इवेदर्यमणं निनाय जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूंरिवाजौ अस्यार्थः हे बृहस्पते बृहस्पतिस्त्वद्देवपु
रोहितः आंगिरसो बृहस्पतिः गोभिर्वृषैः रथमित्यर्थात् संनक्षमाणः रथस्य संनहनं कुर्वन् यकारलोपश्छांदसः अर्यमणं देवं भग
इव षड्विधमैश्वर्यमिव निनाय प्रापितवान् तत्र दृष्टांतः जने इति नकार उपमायां यथा लोके मित्रः सखा दंपती अनक्ति आ

ततो नवं रथं शुभ्रं कंबलाजिनसंवृतं युक्तं षोडशभिर्गोभिः पांडुरैः शुभलक्षणैः ३२ मंत्रैरभ्य
र्चितः पुण्यैः स्तूयमानश्च वंदिभिः आरुरोह रथं चैव सोमोऽमृतमयं यथा ३३ जग्राह रश्मीन्कौं
तेयो भीमो भीमपराक्रमः अर्जुनः पांडुरं छत्रं धारयामास भानुमत् ३४ ध्रियमाणं च तच्छ
त्रं पांडुरं रथमूर्धनि शुशुभे तारकाकीर्णं सितमभ्रमिवांबरे ३५ चामरव्यजने त्वस्य वीरौ जगृह
तुस्तदा चंद्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलंकृते ३६ ते पंच रथमास्थाय भ्रातरः समलंकृताः
भूतानीव समस्तानि राजन्ददृशिरे तदा ३७ ॥

न्योन्यसंबद्धं करोति एवं नगरं गतामै
श्वर्यलक्ष्मीपरिणेष्यन्
गोरथेन नगरं प्रविशयेद्राजानं पुरोहितः एवं जयलक्ष्मीपरिणेष्यन् अश्वरथेन आजिं प्रविशेदित्याह वाजयेति आजौ सं
ग्रामे आशून् आजौ संग्रामे आशून् अश्वान् रथे युंजन् वाजय अमा मयि यजमानं जयलक्ष्मीं परिणेतुमित्यर्थात् द्रष्टुं जनीयं ३२
अमृतमयं देवतामयं ३३ ३४ तारकास्ताराः तत्तुल्याः छत्रप्रांतस्थमौक्तिकगुच्छाश्च ३५ ३६ यथा देहरथो भूतपंचकमयः
एवं सोऽपि रथो भ्रात्पंचकयुक्तः ३७ ॥

श्री. शां. पा. टी. ७५

युयुत्सुर्धृतराष्ट्रपुत्रः ३८ ३९ नरयानं नरवाहनं इति म्लेच्छभाषायां प्रसिद्धं न तु शिबिका ४० ४२ आकुलाकुलम
तिसंमर्दवशात् ४४ ४५ माल्येन पुष्पसमूहेन मेदिनी समलंकृता तेन त्रुषु(?)ज्यते धूपनैः अगरुप्रभृतिभिर्धूपद्रव्यैः ४६

आस्थाय तं रथं शुभ्रं युक्तमश्वैर्मनोजवैः अन्वयात्पृष्ठतो राजन् युयुत्सुः पाण्डवाग्रजं ३७ रथं हे
ममयं शुभ्रं शैब्यसुग्रीवयोजितं सह सात्यकिना कृष्णः समास्थायान्वयात्कुरून् ३९ नरयानेन तु
ज्येष्ठः पिता पार्थस्य भारत अग्रतो धर्मराजस्य गांधारीसहितो ययौ ४० कुरुस्त्रियश्च ताः सर्वाः कुं
ती कृष्णा तथैव च यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ४१ ततो रथाश्च बहुला नागाश्च सम
लंकृताः पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ४२ ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः स्तू
यमानो ययौ राजा नगरं नागसाह्वयं ४३ तत्प्रयाणं महाबाहोर्बभूवाप्रतिमं भुवि आकुलाकुल
मुत्कृष्टहृष्टपुष्टजनाकुलं ४४ अभियानं तु पार्थस्य नरैर्नगरवासिभिः नगरं राजमार्गश्च
यथावत्समलंकृतं ४५ पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी संस्कृतो राजमार्गो भूद्धूपनैश्च प्रधू
पितः ४६ अथ चूर्णैश्च गन्धानां नानापुष्पप्रियंगुभिः माल्यदामभिरासक्तै राजवेश्माभिसंवृतं ४७
कुंभाश्च नगरद्वारि वारिपूर्णा नवा दृढाः कन्याः सुमनसो गौराः स्थापितास्तत्र तत्र ह ४८ तथा स्व
लंकृतद्वारं नगरं पाण्डुनन्दनः स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ४९ इति महाभारते शां

स्वस्त्या

४७ सिताः चूर्णादिना शुक्लीकृताः सुमनसः पुष्पाणि गौराः शुक्लाः ४८ ४९ सप्तत्रिंशः ३७ ॥

प्रवेशने १२ स्त्रीणांस्त्रीभिः ३ ४ ५ ६ ७ ८ ९ १० ११ १२ ॥

वैशंपायनउवाच प्रवेशनेतपार्थानांजनानांपुरवासिनां दिदृक्षूणांसहस्त्राणिसमाजग्मु
स्सहस्रशः १ सराजमार्गःशुशुभेसमलंकृतचत्वरः यथाचंद्रोदयेराजनवर्द्धमानोमहोदा
धिः २ गृहाणिराजमार्गेषुरत्नवंतिमहांतिच प्राकंपंतीवभारेणस्त्रीणांपूर्णानिभारत ३
ताःशनैरिवसव्रीडंप्रशशंसुर्युधिष्ठिरं भीमसेनार्जुनौचैवमाद्रीपुत्रौचपांडवौ ४ धन्यात्वम
सिपांचालियात्वंपुरुषसत्तमान् उपतिष्ठसिकल्याणिमहर्षीनिवगौतमी ५ तवकर्माण्यमो
घानिव्रतचर्याचभाविनि इतिकृष्णांमहाराजप्रशशंसुस्तदास्त्रियः ६ प्रशंसावचनैस्तासां
मिथःशब्दैश्चभारत प्रीतिजैश्चतदाशब्दैःपुरमासीत्समाकुलं ७ तमतीत्ययथायुक्तंराजमा
र्गंयुधिष्ठिरः अलंकृतंशोभमानमुपायाद्राजवेश्मह ८ ततःप्रकृतयःसर्वाःपौरजानपदा
जगुःकथाःश्रोत्रसुखाःसमुपेत्यततस्ततः ९ दिष्ट्याजयसिराजेंद्रशत्रून्शत्रुनिषूदन दि
ष्ट्याराज्यंपुनःप्राप्तंधर्मेणचबलेनच १० भवनस्त्वंमहाराजराजेहशरदांशतं प्रजाःपालय
धर्मेणयथेंद्रस्त्रिदिवंतथा ११ एवंराजकुलद्वारिमंगलैरभिपूजितः आशीर्वादान्द्विजैरुक्ता
नप्रतिगृह्यसमंततः १२ ॥

१३ १४ अभिरूपान्मंगलद्रव्यपाणीन् १५ १७ किमिच्छसि किमिच्छसीति एच्छद्भिर्भृत्यैर्विविधैर्गोवस्त्रादिद्रव्यैर्निमंत्र

प्रविश्य भवनं राजा देवराजगृहोपमं शुद्धाविजयसंयुक्तं यथा त्वष्टा दिवाकरः १३ प्रविश्याभ्यंतरं
श्रीमान्देवतान्यभिगम्य च पूजयामास रत्नैश्च गंधमाल्यैश्च सर्वशः १४ निष्क्रम्य स ततः श्रीमान्स तु
देवमहायशाः ददर्श ब्राह्मणांश्चैव सोभिरूपानवस्थितान् १५ समंततस्तदा विप्रैराशीर्वादविवक्षुभिः
शुशुभे विमलश्चंद्रस्तारागणावृतो यथा १६ तांस्तथैव पूजयामास कौंतेयो विधिवद्द्विजान् यौम्यं गुरुं
पुरस्कृत्य ज्येष्ठं पितरमेव च १७ सुमनोमोदकैर्रत्नैर्हिरण्येन च भूरिणा गोभिर्वस्त्रैश्च राजेंद्र विविधै
श्च किमिच्छकैः १८ ततः पुण्याहघोषोभूद्दिवं स्तब्ध्वेव भारत सुहृदां प्रीतिजननः पुण्यः श्रुतिसुखावहः
हः १९ हंसवन्नेदुषां राजा द्विजानां तत्र भारती शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरा २० ततो दुंदुभि
निर्घोषः शंखानां च मनोरमः जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप निःशब्दे च स्थिते तत्र ततो विप्रज
नेपुनः राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोब्रवीत् २२ तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः
सांख्यः शिखी त्रिदंडी च धृष्टो विगतसाध्वसः २३ वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः परं सहस्रैः
राजेंद्र तपोनियमसंश्रितैः २४ स दुष्टः पापमाशंसुः पांड

यद्विविनर्थः १८ स्वव्याख्यातः १९ २१ २३ २५ ॥

ब्राह्मणमहासजा प्रजानमेवैक्नान्विप्रान्सूपाश्च महीपतिः २१

२६ २७ प्रत्यासन्नाः समीपस्थाः व्यसनिनः विरुद्धः विनोऽभ्रात्रादयो यस्य तं भ्रात्रादिद्रुः स्वपरिहारार्थं ममेदं राज्यकरणं न तु

चार्वाक उ० इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि धिग्भवंतं कुनृपतिं ज्ञातिघातिनमस्तु वै
किं तेन स्याद्धि कौंतेय कृत्वेमं ज्ञातिसंक्षयं २६ घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितं इति ते वै द्वि
जाः श्रुत्वा तस्य घोरस्य रक्षसः २७ विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ततस्ते ब्राह्मणाः स
र्वे स च राजा युधिष्ठिरः व्रीडिताः परमोद्विग्नास्तूष्णीमासन् विशांपते २८ युधिष्ठिर उ० प्रसीदंतु
भवंतो मे प्रणतस्याभियाचतः प्रत्यासन्नव्यसनिनं न मां धिक्कर्तुमर्हथ २९ वैशंपायन उ० ततो रा
जन् ब्राह्मणास्ते सर्व एव विशांपते ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव ३० जज्ञुश्चैव महात्मा
नस्ततस्तं ज्ञानचक्षुषा ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ३१ ब्राह्मणा ऊचुः एष दुर्यो
धनसखा चार्वाको नाम राक्षसः परिव्राजकरूपेण हितं तस्य चिकीर्षति ३२ न वयं ब्रूम धर्मात्मन्व्ये
तु ते भयमीदृशं उपतिष्ठतु कल्याणं भवंतं भ्रातृभिः सह ३३ वैशंपायन उ० ततस्ते ब्राह्मणाः सर्वे
हुंकारैः क्रोधमूर्छिताः निर्भर्त्सयंतः शुचयो निजघ्नुः पापराक्षसं ३४ स पपात विनिर्दग्धस्ते
जसा ब्रह्मवादिनां माहेंद्राशनिनिर्दग्धः पादपोंऽकुरवानिव ३५ ॥

स्वाबोर्थमित्यर्थः जज्ञुः ज्ञातवंतः ३१ ३२ ३३ ३४ ३५ ॥

३९ अष्टत्रिंशः ३८ ब्राह्मणाः १ २ ३ ४ ५ ६ ७ विहितःमयाआत्मः ८ ९ १० ११ ॥

पूजिताश्चययुर्विप्राराजानमभिनंद्यतं राजाचहर्षमापेदेपांडवःसहसज्जनः ३९ इतिश्रीमहाभारतेरा
जधर्मेचार्वाकवधेअष्टत्रिंश ३८ वैशंपायनउ॰ ततस्तत्रतुराजानंतिष्ठंतंभ्रातृभिःसह उवाचदेवकीपु
त्रःसर्वदर्शीजनार्दनः १ वासुदेवउ॰ ब्राह्मणास्तातलोकेस्मिनर्चनीयाःसदामम एतेभूमिचरादे
वावाग्विषाःसुप्रसादकाः २ पुराकृतयुगेराजंश्चार्वाकोनामराक्षसः तपस्तेपेमहाबाहोबदर्यांबहुवा
र्षिकं ३ छंद्यमानश्चब्रह्मणाचपुनःपुनः अभयंसर्वभूतेभ्योवरयामासभारत ४ द्विजावमा
नादन्यत्रप्रादाद्वरमनुत्तम अभयंसर्वभूतेभ्योददौतस्मैजगत्पतिः ५ सतुलब्धवरःपापोदेवानामित
विक्रमः राक्षसस्तापयामासतीव्रकर्मामहाबलः ६ ततोदेवाःसमेताश्चब्रह्माणमिदमब्रुवन् व
धायरक्षसस्तस्यबलविप्रकृतास्तदा ७ तानुवाचाव्ययोदेवोविहितंतत्रवैमया यथास्यभवितामृ
त्युरचिरेणेतिभारत ८ राजादुर्योधनोनामसखास्यभवितानृषु तस्यस्नेहावब
द्धोसौब्राह्मणानवमंस्यते ९ तत्रैनंरुषिताविप्राविप्रकारप्रधर्षिताः
धक्ष्यंतिवाग्बलाःपापंततोनाशंगमिष्यति १० सएषनिहतःशे
तेब्रह्मदंडेनराक्षसः चार्वाकोनृपतिश्रेष्ठमाशुचोभरतर्षभ ११ ॥

१२ १३ नवत्रिंशः ३९ ततः कुंती गतमन्युः वीतदैन्यः गतज्वरः वीतशोकः १ निषीदतुरिति निषेदतुरित्यर्थे आर्षं २

हतास्ते तत्स्वधर्मेण त्वत्तनयास्तव पार्थिव स्वर्गताश्च महात्मानो वीराः क्षत्रियपुंगवाः ९ स त्व
मातिष्ठ कार्याणि मा ते भूद्ग्लानिरच्युत शत्रून्जहि प्रजांश्च परिरक्ष जय १२ इति श्रीशांतौ
राजधर्मे चार्वाकवधः ३९ वैशंपायन उ० ततः कुंतीसुतो राजा गतमन्युर्गतज्वरः कांचने
प्राङ्मुखो हृष्टो न्यषीदत्परमासने १ तमेवाभिमुखौ पीठे प्रदीप्ते कांचने शुभे सात्यकिर्वासुदे
वश्च निषीदतुररिंदमौ २ मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ निषीदतुर्महात्मानौ श्ल
क्ष्णयोर्मणिपीठयोः ३ दांते सिंहासने शुभ्रे जांबूनदविभूषिते पृथापि सहदेवेन सहास्ते
नकुलेन च ४ सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्
पृथक् ५ युयुत्सुः संजयश्चैव गांधारी च यशस्विनी धृतराष्ट्रो यतो राजा ततः सर्वे समा
विशन् ६ तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन्
७ ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितं ददृशुर्धर्मराजानमादाय बहुमंगलं ८ पृथिवीं च सुवर्णं च
रत्नानि विविधानि च आभिषेचनिकं भांडं सर्वसंभारसंभृतं ९ ॥

३ दांते गजदंतमये ४ सुधर्मा दुर्योधनपुरोहितः ५ ६ स्वस्तिकान् सर्वतोभद्रादिचित्रितानि देवतापीठानि ७ ८ भांडं उपकरणं ९ ॥

जारत्तदि

श्री·
शां·रा·
टी·
२८

औडुंबरास्ताम्रमयाः ९ उडुंबरकाष्ठमयःस्रुवः ११ १२ १६ अमृतमुखः अत्यंतदर्शनीयः १७ १९ १९ २० २१ २२ ॥

कांचनौडुंबरास्तत्रराजताःपृथिवीमयाः पूर्णाःकुंभाःसुमनसोलाजाबर्हींषिगोरसं ९ शमीपिप्पलपालाशसमिधोमधुसर्पिषी स्रुवऔडुंबरःशंखस्तथाहेमविभूषितः ११ दाशार्हेणाभ्यनुज्ञातस्तत्रधौम्यःपुरोहितः प्रागुदक्प्रवणांवेदींलक्षणेनोपलिप्यच १२ व्याघ्रचर्मोत्तरेशुक्लेसर्वतोभद्रआसने दृढपादप्रतिष्ठानेहुताशनसमत्विषि १३ उपवेश्यमहात्मानंकृष्णांचद्रुपदात्मजां जुहावपावकंधीमान्विधिमंत्रपुरस्कृतं १४ ततउत्थायदाशार्हःशंखमादायपूजितं अभ्यषिंचत्पतिंपृथ्व्याःकुंतीपुत्रंयुधिष्ठिरं १५ धृतराष्ट्रश्चराजर्षिःसर्वाःप्रकृतयस्तथा अनुज्ञातोथकृष्णेनभ्रातृभिःसहपांडवः १६ पांचजन्याभिषिक्तश्चराजामृतमुखोभवत् ततोनुवादयामासुःपणवानकदुंदुभीन् १७ धर्मराजोपितत्सर्वंप्रतिजग्राहधर्मतः पूजयामासतांश्चापिविधिवद्भूरिदक्षिणः १८ ततोनिष्कसहस्रेणब्राह्मणान्स्वस्तिवाचयत् वेदाध्ययनसंपन्नान्धृतिशीलसमन्वितान् १९ तेप्रीताब्राह्मणाराजन्स्वस्त्यूचुर्जयमेवच हंसाइवचनर्दंतःप्रशशंसुर्युधिष्ठिरं २० युधिष्ठिरमहाबाहोदिष्ट्याजयसिपांडव दिष्ट्यास्वधर्मंप्राप्तोसिविक्रमेणमहाद्युते २१ दिष्ट्यागांडीवधन्वाचभीमसेनश्चपांडवः त्वंचापिकुशलीराजन्माद्रीपुत्रौचपांडवौ २२ ॥

२३ २४ युधिष्ठिराभिषेकश्चत्वारिंशत्तमोध्यायः ४० प्रकृतीनां तद्वाक्यंदिष्ट्याजयसीत्यादि अंतरंपश्चात् १ २ ३ ४ ५ ६ ७ ८

मुक्तावीरत्वयातस्मात्संग्रामाद्विजितद्विषः क्षिप्रमुत्तरकार्याणिकुरुसर्वाणिभारत २३ ततःप्रत्य
र्चितःसद्भिर्धर्मराजोयुधिष्ठिरः प्रतिपेदेमहद्राज्यंसुहृद्भिःसहभारत २४ इतिश्रीमहाभारतेशांतौरा

वैशंपायनउ०

जधर्मेयुधिष्ठिराभिषेकः ४० प्रकृतीनांचतद्वाक्यंदेशकालोपबृंहितं श्रुत्वायुधिष्ठिरोराजाथेदंवचनमब्र
वीत १ धन्याःपांडुसुतानूनंयेषांब्राह्मणपुंगवाः तथ्यान्वाप्यथवातथ्यान्गुणानाहुःसमागताः
२ अनुग्राह्यावयंनूनंभवतामितिमेमतिः यदेवंगुणसंपन्नानस्मान्ब्रूथविमत्सराः ३ धृतराष्ट्रोमहा
राजःपितामेदैवतंपरं शासनेस्यप्रियेचैवस्थेयंमत्प्रियकांक्षिभिः ४ एतदर्थंहिजीवामिकृत्वाज्ञा
तिवधंमहत् अस्यशुश्रूषणंकार्यंमयानित्यमतंद्रिणा ५ यदिचाहमनुग्राह्योभवतांसुहृदांतथा
धृतराष्ट्रेयथापूर्वंवृत्तिंवर्तितुमर्हथ ६ एषनाथोहिजगतोभवतांचमयासह अस्यैवपृथिवीकृत्स्ना
पांडवाःसर्वएवच ७ एतन्मनसिकर्तव्यंभवद्भिर्वचनंमम अनुज्ञाप्याथतान्राजायथेष्टंगम्य
तामिति ८ पौरजानपदान्सर्वान्विसृज्यकुरुनंदनः यौवराज्येनकौंतेयंभीमसेनमयोजयत् ९
मंत्रेचनिश्चयेचैवषाड्गुण्यस्यचचिंतने विदुरंबुद्धिसंपन्नंप्रीतिमान्ससमादिशत् १० ॥

श्री॰
शां॰ रा॰
टी॰
७५

११ १७ यत्नअस्यकार्यंतदेवममकार्यंतच्चभवद्भिःकर्तव्यमित्यर्थः १८ राजानंधृतराष्ट्रंअनुज्ञाप्यतानिकार्याणिकर्तव्यानीत्यर्थः १९

कृताकृतपरिज्ञानेतथायव्ययचिंतने संजयंयोजयामासमृद्धंसर्वगुणैर्युतं ११ बलस्यपरिमाणेच भक्तवेतनयोस्तथा नकुलंव्यादिशद्राजाकर्मणांचान्ववेक्षणे १२ परचक्रोपरोधेचदुष्टानांचावम र्दने युधिष्ठिरोमहाराजफाल्गुनंव्यादिदेशह द्विजानांदेवकार्येषुकार्येष्वन्येषुचैवह धौम्यंपुरोधसां श्रेष्ठंनित्यमेवसमादिशत् १४ सहदेवंसमीपस्थंनित्यमेवसमादिशत् तेनगोप्योहिनृपतिःसर्वाव स्थाविशांपते १५ यान्यानमन्यद्योग्यांश्चयेषुयेष्विहकर्मसु तांस्तांस्तेष्वेवयुयुजेप्रीयमाणोमही पतिः १६ विदुरंसंजयंचैवयुयुत्सुंचमहामतिं अब्रवीत्परवीरघ्नोधर्मात्माधर्मवत्सलः १७ उत्था योत्थाययत्कार्यमस्यराज्ञःपितुर्मम सर्वंभवद्भिःकर्तव्यमप्रमत्तैर्यथायथं १८ पौरजानपदानांचया निकार्याणिसर्वशः राजानंसमनुज्ञाप्यतानिकार्याणिभागशः १९ इतिश्रीमहाभारतेशांतौराज धर्मेषुभीमसेनयौवराज्याभिषेकः ४१ वैशंपायनउ॰ ततोयुधिष्ठिरोराजाज्ञातीनांयेहतायुधि श्रा द्धानिकारयामासतेषांपृथगुदारधीः १ धृतराष्ट्रोददौराजापुत्राणामौर्ध्वदेहिकं सर्वकामगुणोपेत

एकचत्वारिंशः ४१ ततोयु॰ १ २ ३ ॥ मन्नगाश्चधनानिच २ रत्नानिचविचित्राणिमहार्हाणिमहायशाः

युधिष्ठिरस्वदेशाणांस्वकार्यसमर्पणं ३ ॥

७५

४ ५ ६ उद्दिश्येति सभाः धर्मशालाः तत्तन्नामांकितानि सभादीनि चक्रे इयममुकस्य सभा इयममुकस्य सभेति यतेन सभा

धृष्टद्युम्नाभिमन्युभ्यां हैडिंबस्य च रक्षसः विराटप्रभृतीनां च सुहृदामुपकारिणां ४ द्रुपदो द्रौपदेया
नां द्रौपद्याश्च सहितो ददौ ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ५ धनै रत्नैश्च गोभिश्च वस्त्रै
श्च समतर्पयत् ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ६ उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्व
देहिकं सभाः प्रपाश्च विविधास्तडागानि च पांडवः ७ सुहृदां कारयामास सर्वेषामौर्ध्वदेहिकं स
तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यतां ८ कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् धृतराष्ट्रं
यथापूर्वं गांधारीं विदुरं तथा ९ सर्वांश्च कौरवान्मान्यान्भृत्यांश्च समपूजयत् याश्च तत्र स्त्रियः
काश्चिद्धतवीरा हतात्मजाः १० सर्वास्ताः कौरवो राजा संपूज्यापालयद्घृणी दीनांधकृपणानां च
गृहाच्छादनभोजनैः ११ आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः स विजित्य महीं कृत्स्नामानृण्यं
प्राप्य वैरिषु १२ निःसपत्नः सुखी राजा विजहार युधिष्ठिरः १३ इति श्रीमहाभारते शांतौ राजधर्मे
श्राद्धक्रिया ४२ वैशंपायन उ० अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः दाशार्हं पुंडरीकाक्षमुवा
च प्रांजलिः शुचिः १ तव कृष्ण प्रसादेन नयेन च बलेन च बुद्ध्या च यदुशार्दूल तथा विक्रमेण च २

दिकरणात्संतानफलं लभ्यत इति गम्यते ७ ८ ९ १० ११ १२ द्विचत्वारिंशः अभि १ २ ॥

श्री॰
शां॰रा॰
टी॰
८॰

३ पुरुषं सर्वशरीरशायिनं सात्वतां उपासकानां पतिं पालकं ४ विश्वस्य संभवो योनिः ५ सप्तधा विश्वाख्य आदित्यो वामनश्चेति द्वेधा अदित्यामेव जन्म ततो अदितेर्रूपांतरेषु पृश्निप्रभृतिषु क्रमात् पृश्निगर्भः परशुरामः दाशरथी रामः यादवौ रामकृष्णौ चेति सर्वेषु गर्भेषु एकपदवत्त्वेन तत्प्रतिगर्भं भिन्नः त्रिषु वर्त्तमानयुगात्पूर्वेषु भवं त्रियुगं अन्ये तु धर्मज्ञानवैराग्यैश्वर्य

पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया नमस्ते पुंडरीकाक्ष पुनः पुनररिंदम ३ त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिं नामभिस्त्वां बहुविधैः स्तुवंति प्रयता द्विजाः ४ विश्वकर्मन्नमस्ते स्तु विश्वात्मन्विश्वसंभव विष्णो जिष्णो हरे कृष्ण वैकुंठ पुरुषोत्तम ५ अदित्याः सप्तधा त्वं तु पुराणे गर्भतां गतः पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदंत्यपि ६ शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यते त्रिचक्षुः शंभुरेकस्त्वं विभुर्दामोदरोपि च ७ वराहोग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ८ ॥

श्रीयशसी चेति त्रीणि युग्मानि तद्वंतमित्याहुः ६ शुचिश्रवाः पुण्यकीर्तिः घृतार्चिः यज्ञेश्वरः हंसः ब्रह्मणोपि गुरुः त्रीणि चक्षूंषि दर्शनसाधनानि श्रुत्यनुमानप्रत्यक्षाणि यस्मिन् ७ बृहद्भानुः सूर्यः वृषभो धर्मः तार्क्ष्यलक्षणो गरुडध्वजः अनीकसाहः शत्रुसेनावमर्दी शिपिविष्टः सर्वशरीरांतःप्रविष्टः पुरुषः जीवः ८ ॥

८॰

वसिष्ठः उत्तमः वाजसनिः अन्नप्रदः गुहः देवसेनानीः संस्कृतो विप्रादिरूपः विकृतः अनुलोमजविलोमजादिरूपः वृषः श्रे
ष्ठः परिव्राजादिरूपः ९ कुशलधर्म्मः यज्ञादिरूपः वृषाः इन्द्रस्तं दभ्नातीति वृषदर्भः इन्द्रदर्पहन्ता वृषाकपिः ईश्वररूपी सिन्धुः
समुद्रः विधर्मः निर्गुणः त्रिककुप् कर्म्मयोग्यप्राग्दक्षैशानदिग्रूपः त्रिधामा सूर्यचन्द्राग्निप्रभः त्रिदिवात् च्युतोऽवतीर्णः

वसिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः अच्युतः पावनो भीमः संस्कृतिर्विकृतिर्वृषः ९ ऊर्ध्ववर्त्मा
त्वमेवाद्रिर्वृषदर्भो वृषाकपिः सिन्धुर्विधर्मस्त्रिककुप् त्रिधामा त्रिदिवाच्युतः १० सम्राट् स्वराट् चैव
स्वराजो भवोद्भवः विभुर्भूरभिभूः कुशलः कुशवर्त्मा त्वमेव च ११ स्विष्टकृद्भिषजावर्त्तः कपिल
स्त्वं च वामनः १२ यज्ञोद्भवः पतंगश्च यज्ञसेनस्त्वमुच्यसे शिखण्डी नहुषो बभ्रुर्दिवस्पृक् त्वं पु
नर्वसुः १३ स्वबन्धुः रुक्मयज्ञश्च सुषेणो दुन्दुभिस्तथा गभस्तिनेमिः श्रीपद्मः पुष्करः पुष्पधारणः
१४ ऋतुर्विभुः सर्वसूक्ष्मश्चारित्रं चैव पठ्यसे अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित् हिरण्य
गर्भस्त्वमाद्यः स्वधा स्वाहा च केशवः १५ योनिस्त्वमस्य प्रलयश्च कृत्स्नस्त्वमेवेदं सृजसि विश्वमग्रे
विश्वं चेदं त्वद्वशो विश्वयोने नमोऽस्तु ते शार्ङ्गचक्रासिपाणे १६ ॥

१० भूः सत्तारूपः अतिभूः अशरीरः ११ भिषजावर्त्तः भिषजौ अश्विनौ आवर्त्तत इत्यावर्त्तः तयोः पिता सूर्यः १२ पतंगः गरु
डः बभ्रुः महेश्वरः पुनर्वसुः नक्षत्रभेदः १३ स्वबन्धुः स्वतः पिंगलवर्णः गभस्तिरर्कः नेमिः परिधिर्यस्य स कालरूपः १४

श्री
शां॰रा॰
टी॰
८९

० त्रिंचत्वारिंशः ४३ ततोविसृष्टार्थः १ २ ३ ४ ५ ६ ७ ८ ९ १० ॥

एवंस्तुतोधर्मराजेनकृष्णःसभामध्येप्रीतिमान्पुष्कराक्षः तमभ्यनंदद्भारतंपुष्कलाभिःवाग्भिर्ज्येष्ठं
पांडवंयादवाग्र्यः १७ इतिश्रीमहाभारतेशांतौराजधर्मेवासुदेवस्तुतिः ४३ वैशंपायनउ॰ ततो
विसर्जयामाससर्वाःप्रकृतयोनृपः विविशुश्चाभ्यनुज्ञातायथास्वानिगृहाणिते १ ततोयुधिष्ठिरो
राजाभीमंभीमपराक्रमं सांत्वयन्नब्रवीच्छ्रीमानर्जुनंयमजौतथा २ शत्रुभिर्विविधैःशस्त्रैःक्षत
देहामहारणे श्रांताभवंतःसुभृशंतापिताःशोकमन्युभिः ३ अरण्येदुःखवसतीर्मत्कृतेभरतर्ष
भाः भवद्भिरनुभूताहियथाकुपुरुषैस्तथा ४ यथासुखंयथाजोषंजयोयमनुभूयतां विश्रां
तान्लब्धविज्ञानान्श्वःसमेतास्मिवःपुनः ५ ततोदुर्योधनगृहंप्रासादैरुपशोभितं बहुरत्न
समाकीर्णंदासीदाससमाकुलं ६ धृतराष्ट्राभ्यनुज्ञातंभ्रात्रादत्तंवृकोदरः प्रतिपेदेमहाबाहु
र्मंदिरंमघवानिव ७ यथादुर्योधनगृहंतथादुःशासनस्यतु प्रासादमालासंयुक्तंहेमतोर
णभूषितं ८ दासीदाससुसंपूर्णंप्रभूतधनधान्यवत् प्रतिपेदेमहाबाहुरर्जुनोराजशासनात्
९ दुर्मर्षणस्यभवनंदुःशासनगृहाद्वरं कुबेरभवनप्रख्यंमणिहेमविभूषितं १० ॥

१२ १३ १४ १५ १६ १७ १८ १९ २० चतुश्चत्वारिंशः ४४ प्राप्य १ २ ३ ४ ५ ६ ॥

नकुलाय वरार्हाय कर्षिताय महावने ददौ प्रीतो महाराज धर्मपुत्रो युधिष्ठिरः ११ दुर्मर्षणस्य चैव गृहं श्रीमत्कनकभूषणं पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसंकुलं १२ प्रददौ सहदेवाय सततं प्रियकारिणे मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा १३ युयुत्सोर्विदुरस्यैव संजयस्य विशांपते सुधर्माय च धौम्याय यथार्हं व्यादिशद्गृहान् १४ सह सात्यकिना शौरिरर्जुनस्य निवेशनं विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव १५ तत्र भक्षान्नपानैस्ते मुदिताः सुखोषिताः सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरं १६ इति श्रीमहाभारते शान्तौ राजधर्मे ४४ जनमेजय उवाच प्राप्य राज्यं महाबाहुर्धर्मपुत्रो युधिष्ठिरः यदन्यदकरोत् विप्र तन्मे वक्तुमिहार्हसि १ भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि २ वैशंपायन उ० शृणु तत्वेन राजेन्द्र कीर्त्यमानं मयानघ वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ३ प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः चातुर्वर्ण्यं यथायोगं स्वे स्वे स्थाने न्यवेशयत् ४ ब्राह्मणानां सहस्रं च स्नातकानां महात्मनां सहस्रं निष्कमेकैकं दापयामास पाण्डवः ५ तथानुजीविनो भृत्यान्संश्रितानतिथीनपि कामैः संतर्पयामास कृपणांस्तार्किकानपि ६ ॥

श्री॰
शां॰रा॰
टी॰
८२

७ ८ ९ लब्धप्रशमनं लब्धस्यपनादेः यथोचितंशातःपात्रेसमर्पणेनशांतिकं १० ११ १२ १३ १४ १५ १६ १७ १८ १९

पुरोहिताय धौम्याय प्रादादयुतशः सगाः धनं सुवर्णं रजतं वासांसि विविधान्यपि ७ कृपाय च महाराज गुरुवृत्तिमवर्त्तत विदुरायच राजासौ पूजां चक्रे यतव्रतः ८ भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः सर्वान्संतोषयामास संश्रितान्ददतांवरः ९ लब्धप्रशमनं कृत्वा सराजा राजसत्तम युयुत्सोर्धार्त्तराष्ट्रस्य पूजां चक्रे महायशाः १० धृतराष्ट्राय तद्राज्यं गांधार्यै विदुरायच निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ११ तथा सर्वं स नगरं प्रसाद्य भरतर्षभ वासुदेवं महात्मानमभ्यगच्छत्कृतांजलिः १२ ततो महति पर्यंके मणिकांचनभूषिते ददर्श कृष्णमासीनं नीलमेघसमद्युतिं १३ जाज्वल्यमानं वपुषा दिव्याभरणभूषितं पीतकौशेयवसनं हेम्नेवोपगतं मणिं १४ कौस्तुभेनोरसिस्थेन मणिनाभिविराजितं उद्यंतमिवोदयं शैलं सूर्येणाभिविराजितं १५ नौपम्यं विद्यते तस्य त्रिषु लोकेषु किंच सोभिगम्य महात्मानं विष्णुं पुरुषविग्रहं १६ उवाच मधुरं राजा स्मितपूर्वमिदं तदा सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर १७ कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत तथैवोपश्रिता देवी बुद्धिर्बुद्धिमतां वर १८ वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता तव प्रसादाद्भगवंस्त्रिलोकगतिविक्रम १९ ॥

१९ २९ पंचचत्वारिंशः ४५ किमिदं १ चतुर्थंजाग्रत्स्वप्नसुषुप्तेभ्यः परंआलंब्य अपक्रांतः देहत्रयात् २ पंचकर्माप्राणा
नादिकारी ३ सत्वंमनः वायुपलक्षितानींद्रियाणिचबुद्धौमहतत्वेगुणाः शब्दादिगुणभाजोदेवाः श्रोत्रादीनींद्रियाणि ४ नेंग

जयंप्राप्ययशश्चाग्र्यंनचधर्मच्युतावयं ततस्थाभाषमाणंतुधर्मराजमरिंदमं नोवाचभगवान्किंचि
द्ध्यानमेवान्वपद्यत २९ इतिश्रीमहाभारतेशांतौराजधर्मे ४५ युधिष्ठिरउ॰ किमिदंपरमाश्चर्यं
ध्यायस्यमितविक्रम कच्चिल्लोकत्रयस्यास्यस्वस्तिलोकपरायण १ चतुर्थंध्यानमार्गंत्वमाल
म्ब्यपुरुषर्षभ अपक्रांतोदेवस्तेनमेविस्मितंमनः २ निगृहीतोहिवायुस्तेपंचकर्माशरीरगः इं
द्रियाणिप्रसन्नानिमनसिस्थापितानिते ३ वाक्चसत्वंचगोविंदबुद्धौसंविशितानिते सर्वेचै
वगुणादेवास्तेक्षेत्रेनिवेशिताः ४ नेंगंतितवरोमाणिस्थिराबुद्धिस्तथामनः काष्ठकुड्यशि
लाभूतोनिरीहश्चासिमाधव ५ यथादीपोनिवातस्थोनिरिंगोज्वलतेपुनः तथासिभगवन्दे
वपाषाणइवनिश्चलः ६ यदिश्रोतुमिहार्हामिनरहस्यंचतेयदि छिंधिमेसंशयंदेवप्रपन्नाया
भियाचते ७ त्वंहिकर्ताविकर्ताचत्वंक्षरंचैवाक्षरंचहि अनादिनिधनश्चाद्यस्त्वमेवपुरुषोत्तम
८ त्वत्प्रपन्नायभक्तायशिरसाप्रणतायच ध्यानस्यास्ययथातत्वंब्रूहिधर्मभृतांवर ९ ततःस्वगो
चरेन्यस्यमनोबुद्धींद्रियाणिसः स्मितपूर्वमुवाचेदंभगवान्वासवानुजः १० ॥

तिनकंपते निरीहोनिश्चेष्टः ५ निरिंगःअचलः ६ ७ ८ ९ स्वगोचरेस्वेस्वेस्थाने १० ॥

११ १६ ध्यातिध्यायति ७ ८ चतस्रोविद्याःधर्मार्थकाममोक्षविद्याःसर्ववर्णसाधारणाः चातुर्होत्रंत्रैवर्णिकानांविशेषध

वासुदेवउ॰ शरतल्पगतोभीष्मःशाम्यन्निवहुताशनः मांध्यातिपुरुषव्याघ्रस्ततोमेतद्गतंमनः
११ यस्यज्यातलनिर्घोषविस्फूर्जितमिवाशनेः नसेहेदेवराजोपितमस्मिमनसागतः १२ येना
भिजित्यतरसासमस्तंराजमंडलं ऊढास्तिस्रस्सुताःकन्यास्तमस्मिमनसागतः त्रयोविंशति
रात्रंयोयोधयामासभार्गवं नचरामेणनिस्तीर्णस्तमस्मिमनसागतः १४ एकीकृत्येन्द्रियग्रामं
मनःसंयम्यमेधया शरणंमामुपागच्छत्ततोमेतद्गतंमनः १५ यंगंगागर्भविधिनाधारया
मासपार्थिव वसिष्ठशिष्यंतंताततमस्मिमनसागतः १६ दिव्यास्त्राणिमहातेजायोधारयति
बुद्धिमान् सांगांश्चचतुरोवेदांस्तमस्मिमनसागतः १७ रामस्यदयितंशिष्यंजामदग्न्यस्यपांडव
आधारंसर्वविद्यानांतमस्मिमनसागतः १८ सहिभूतंभविष्यच्चभवच्चभरतर्षभः वेत्तिधर्मवि
दांश्रेष्ठंतमस्मिमनसागतः १९ तस्मिन्हिपुरुषव्याघ्रेकर्मभिःस्वैर्दिवंगते भविष्यतिमहीपार्थ
नष्टचंद्रेवशर्वरी २० तद्युधिष्ठिरगांगेयंभीष्मभीमपराक्रमं अभिगम्योपसंगृह्यपृच्छयत्तेम
नोगतं २१ चातुर्विद्यंचातुर्होत्रंचातुराश्रम्यमेवच राजधर्मांश्चनिखिलान्पृच्छैनंपृथिवीप
ते २२ तस्मिन्नस्तमितेभीष्मेकौरवाणांधुरंधरे ज्ञानान्यस्तंगमिष्यंतितस्मा
त्त्वांचोदयाम्यहं २२ ॥

र्मोयत्वादि २२ ॥

२४ २५ २६ अनभिध्येयं अविचारणीयं २७ ३२ सइति मसारगल्वर्कमयैर्विटंकैः मसारो मरकतमणिः गल्वश्चंद्रकांतः

तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमं साश्रुकंठः स धर्मात्मा जनार्दनमुवाच ह यद्भवानाह
भीष्मस्य प्रभावं प्रति माधव तथा तन्नात्र संदेहो विद्यते मम माधव २५ महाभाग्यं च भीष्मस्य प्र
भावश्च महाद्युते श्रुतं मया कथयतां ब्राह्मणानां महात्मनां २६ भवांश्च कर्ता लोकानां यद्ब्रवी
त्यरिसूदन तथा तदनभिध्येयं वाक्यं यादवनंदन २७ यदि त्वनुग्रहवती बुद्धिस्ते मयि माधव
त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे वयं २८ आवृत्ते भगवत्यर्के स हि लोकान्गमिष्यति त्व
द्दर्शनं महाबाहो तस्मादर्हति कौरवः २९ तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च दर्शनं तस्य
लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ३० वैशंपायन उ० श्रुत्वैवं धर्मराजस्य वचनं मधुसूदनः पा
र्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ३१ सात्यकिस्त्वाशु निष्क्रम्य केशवस्य समीपतः दारुकं
प्राह कृष्णस्य युज्यतां रथ इत्युत ३२ स सात्यकेराशु वचो निशम्य रथोत्तमं कांचनभूषितांगं म
सारगल्वर्कमयैर्विटंकैर्विभूषितं हेमनिबद्धचक्रं ३३

अर्कः सूर्यकांतः तन्मयैः विभंगैर्विस्तरैः विटंकैरिति पाठे पक्ष्युपवेशनस्थानैः ३३

श्री॰
शां॰रा॰
टी॰
८४

३४ ३५ षट्चत्वारिंशः ४६ शरतल्पे १ २ ३ ४ ५ ६ ७ ८ ॥

दिवाकरांशुप्रभमाशुगामिनंविचित्रनानामणिभूषितांतरं नवोदितंसूर्यमिवप्रतापिनंविचि
त्रतार्क्ष्यध्वजिनंपताकिनं ३४ सुग्रीवशैब्यप्रमुखैर्वराश्वैर्मनोजवैःकांचनभूषितांगैः संयुक्त
मावेदयदच्युतायकृतांजलिर्दारुकोराजसिंह ३५ इतिश्रीमहाभारतेशांतौराजधर्मेमहापुरु
षस्तवः ४६ जनमेजयउ॰ शरतल्पेशयानस्तुभारतानांपितामहः कथमुत्सृष्टवान्देहंकंच
योगमधारयत् १ वैशंपायनउ॰ शृणुष्वावहितोराजञ्छुचिर्भूत्वासमाहितः भीष्मस्यकुरु
शार्दूलदेहोत्सर्गंमहात्मनः २ निवृत्तमात्रेत्वयनउत्तरेवैदिवाकरे समावेशयदात्मानमात्मन्ये
वसमाहितः ३ विकीर्णांशुरिवादित्योभीष्मःशरशतैश्चितः शुशुभेपरयालक्ष्म्यावृतोब्राह्म
णसत्तमैः ४ व्यासेनवेदविदुषानारदेनसुरर्षिणा देवस्थानेनवात्स्येनतथाश्मकसुमंतुना
५ तथाजैमिनिनाचैवपैलेनचमहात्मना शांडिल्यदेवराताभ्यांमैत्रेयेणचधीमता ६ असि
तेनवसिष्ठेनकौशिकेनमहात्मना हारीतलोमशाभ्यांचतथात्रेयेणधीमता ७ बृहस्पति
श्चशुक्रश्चच्यवनश्चमहामुनिः सनत्कुमारःकपिलोवाल्मीकिस्तुंबुरुःकुरुः ८ ॥

८४

१ १५ आतिरायपिष्णुः वक्तृतत्त्वावधारणे पूर्वं कथ्यानं आरायनं तत्कर्तुमिच्छुः जिगदिषामि वक्तुमिच्छामि व्याससमा-
सिन्याविस्तरसंक्षेपवत्या १६ तत्र संक्षेपमादृश्णुचिमिति श्रुचिं स्वतः परतो वा दोषहीनं श्रुचिपदं तादृशं पवपदं प्राप्तिमार्गो यो

मौद्गल्यो भार्गवो रामस्तृणाविन्दुर्महाद्युतिः पिप्पलादोऽथ वायुश्च संवर्त्तः पुलहः कचः ९ का
श्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः मरीचिरंगिराः काश्यपो गौतमो गालवो द्युतिः १० धौ
म्यो विभांडो मांडव्यो धौम्रः कृष्णात्रेभौतिकः उलूकः परमो विप्रो मार्कंडेयो महाद्युतिः ११ भास्क
रिः पूरणः कृष्णः सूतः परमधार्मिकः एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः १२ श्रद्धादमश
मोपेतैर्वृतश्चन्द्र इवग्रहैः भीष्मः स पुरुषव्याघ्रः कर्मणा मनसा गिरा १३ शरतल्पगतः कृष्णं प्रद
ध्यौ प्रांजलिः शुचिः स्वरेणाहृष्टपुष्टेन तत्त्वावमधुसूदनं १४ योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जग
त्पतिं कृतांजलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् १५
भीष्मउ॰ आतिरायपिष्णुः कृष्णं वाचे जिगदिषामि यां तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः
१६ शुचिं शुचिपदं हंसं तत्पदं परमेष्ठिनं युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिं १७ अनाद्यं तं परं
ब्रह्मन देवा नर्षयो विदुः एकोऽयं वेद भगवान्धाता नारायणो हरिः १८ ॥

गोयस्यतं हंसं सर्वातिगं तत्पदं तत्त्वमसीतिवाक्ये तत्पदस्य अर्थभूतं ईश्वरं परमेष्ठिनं हिरण्यगर्भं आत्मानं देहत्रयं १७ १८

१९ २१ सदसत्कार्यकारणं चताभ्यां सूत्रांतर्यामिभ्यां ग्रथितं विश्वं अंगेः शिष्यानभूते यस्य तस्मिन् विश्वंकर्म यस्मात् कोह्येवान्यादि तिश्रुतेः २२ २३ २४ २५ वाकेषु मंत्रेषु सामान्यतः कर्मप्रकाशकेषु अनुवाकेषु मंत्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु निषत्सु क र्मांगाद्यवबद्धदेवतादिज्ञानवाक्येषु उपनिषत्सु केवलात्मज्ञापकवाक्येषु गृणंति ध्यायंति सत्यं अबाधितं सत्येषु अबाधिता

नारायणमहर्षिगणास्तथासिद्धमहोरगाः देवादेवर्षयश्चैवयंविदुःपरममव्ययं १९ देवदानवगं
धर्वायक्षराक्षसपन्नगाः यंविज्ञानंतिकोह्येषकुतोवाभगवानिति २० यस्मिन्विश्वानिभूतानिति
ष्ठंतिचविशंतिच गुणाभूतानिभूतेशेसूत्रेमणिगणाइव २१ यस्मिन्नित्यंततंतंतौदृढेस्रगिवति
ष्ठति सदसद्ग्रथितंविश्वंविश्वांगेविश्वकर्मणि २२ हरिंसहस्रशिरसंसहस्रचरणेक्षणं सहस्र
बाहुमुकुटंसहस्रवदनोज्वलं २३ प्राहुर्नारायणंदेवंयंविश्वस्यपरायणं अणीयसामणी
यांसंस्थवीयसां २४ गरीयसांगरिष्ठंचश्रेष्ठंचश्रेयसामपि यंवाकेष्वनुवाकेषुनिषत्सूपनिष
त्सुच गृणंतिसत्यकर्माणंसत्यंसत्येषुसामसु २६ चतुर्भिश्चतुरात्मानंसत्वस्थंसात्वतांप
तिं यंदिव्यैर्देवमर्चंतिगुह्यैःपरमनामभिः २७ ॥

र्थेषु सामसु ज्येष्ठसामादिषु २६ चतुर्भिर्नामभिः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपैः क्रमात् चतुरात्मानं ब्रह्मजीवमनोऽ
हंकाररूपं सत्वस्थो बुद्धौ अभिव्यक्तं सात्वतां भक्तानां पतिं २७ ॥

नित्यंतपः स्वधर्मः तत्तयस्मिन्यत्प्रीत्यर्थंतन्नमस्त यत्तयस्मात्तदंगेषु विनेषु अनुतिष्ठति उपतिष्ठति यश्च सर्वात्मातंप्रपद्य इति सर्वेषां
यच्छ्रद्धसंबद्धानां प्रथमेनान्वयः ईश्वरार्थमनुष्ठितो धर्मः स्वचित्तशुद्धिद्वारा स्वार्थएव भवतीत्याश्चर्यमिति भावः २८ भौमं ब्रह्म वे
दाब्राह्मणायज्ञाश्च २९ अनन्यः त्यक्तभेदः आत्मानंप्रपंचमेव आत्मानं सर्वेश्वरं आत्मनि हार्दाकाशे दृष्ट्वा सूक्ष्मबुद्ध्या इति पावेयो

यस्मिन्नित्यंतपस्तप्तंयदंगेष्वनुतिष्ठति सर्वात्मासर्ववित्सर्वः सर्वज्ञः सर्वभावनः २८ यंदेवंदेव
कीदेवीवसुदेवादजीजनत् भौमस्यब्रह्मणोगुप्त्यैदीप्तमग्निमिवारणिः २९ यमनन्योव्यपेताशी
रात्मानंवीतकल्मषं दृष्ट्वानंत्यायगोविंदंपश्या त्मानमात्मनि अतिवाय्विंद्रकर्माणमतिसूर्या
तितेजसं अतिबुद्धीन्द्रियात्मानंतंप्रपद्येप्रजापतिं ३१ पुराणेपुरुषंप्रोक्तंब्रह्मप्रोक्तंयुगादिषुक्षयेसं
कर्षणंप्रोक्तंतमुपास्यमुपास्महे ३२ यमेकंबहुधात्मानंप्रादुर्भूतमधोक्षजं नान्यभक्ताः क्रियावंतो
यजंतेसर्वकामदम् ३३ यमाहुर्जगतः कोशंयस्मिन्संनिहिताः प्रजाः यस्मिन्लोकाः स्फुरंतीमे
जलेशकुनयोयथा ऋतमेकाक्षरंब्रह्मयत्तत्सदसतोः परं ३४ ॥

गेनपश्यति अनंत्यायमोक्षाय ३० पुराणे अतीतकल्पादिविषये पुरुषं पूर्णंसर्वमस्मिन्नतीतमस्त्येवेति योगात्पुरुष इतिनाम
युगादिषु युगारंभेषु हंस इत्याकारात् स्रष्टैवंब्रह्मेत्याद्यः क्षयेसर्वस्यसम्यक्संकर्षणात्संकर्षण इत्युक्तः ३२ बहुधा इन्द्रादिदेवतारूपे
ण नान्यभक्ताः अनन्यभक्ताः ३३ शकुनयो हंसकारंडवाद्याः ३४ ॥

३५ ३७ जज्ञेजनयामास ३८ ३९ अतितेजसंस्वयंज्योतिर्यत्तेयात्मनेनतत्उपास्यात्मने ४० उक्थेवह्वृचाः अग्नौचयनेऽध्वर्यवः ४१ ऋ
ग्यजुःसामान्येवयामानियस्यतं दशार्धानिपंच धानाः करंभः परिवापः पुरोडाशः पयस्येतिपंचहवींषितदात्मकं सप्ततंतवस्त्वयो

अनादिमध्यपर्यंतंनदेवानर्षयोविदुः यंस्तुवान्सुरगंधर्वाःसिद्धाऋषिमहोरगाः ३५ प्रयताऽनित्य
मर्चंतिपरमंदुःखभेषजं अनादिनिधनंदेवमात्मयोनिंसनातनं ३६ अप्रेद्यमनभिज्ञेयंहरिंनारा
यणंप्रभुं यंवैविश्वस्यकर्तारंजगतस्तस्थुषांपतिं वदंतिजगतोध्यक्षमक्षरंपरमंपदं ३७ हिरण्य
वर्णंयंगर्भमदितेर्दैत्यनाशनं एकंद्वादशधाजज्ञेतस्मैसूर्यात्मनेनमः ३८ शुक्लेदेवान्पितॄन्कृ
ष्णेतर्प्पयत्यमृतेनयः यश्चराजाद्विजातीनांतस्मैसोमात्मनेनमः ३९ महतस्तमसःपारे
पुरुषंह्यतितेजसं यंज्ञात्वामृत्युमत्येतितस्मैज्ञेयात्मनेनमः ४० यंबृहंतंबृहत्युक्थेयमग्नौयं
महाध्वरे यंविप्रसंघागायंतितस्मैवेदात्मनेनमः ४१ ऋग्यजुःसामधामानंदशार्धहविरात्म
कं यंसप्ततंतुंतन्वंतितस्मैयज्ञात्मनेनमः ४२ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच हूयते
चपुनर्द्वाभ्यांतस्मैहोमात्मनेनमः ४३ ॥

जनीयाः गायत्र्यादयोयस्मिंस्तंसप्ततंतुं ४२ चतुर्भिरितिआश्रावयेतिचतुरक्षरंयजेतिद्व्यक्षरंयेयजामहइतिपंचाक्षरंद्व्यक्षरोव
षट्कारइतिसप्तदशाभिरक्षरैर्योहूयतेतस्मैहोमात्मनेनमः ४३ ॥

सुपर्णः वेदपुरुषः यजुरितियस्यनाम छंदांसिगायत्र्यादीनियस्यगात्राणिइत्यादीनि त्रिवृत्त्रिभिर्ऋग्यजुःसामभिर्वर्ततइति
योगात्यज्ञःसुपर्वशिरोयस्य यस्यरथंतरंबृहच्चवैकल्पिकंसामगीतिवाक्यं ४४ सहस्रसमेसहस्रसंवत्सरे सत्रेजज्ञेआविर्बभूव ४५
पादाक्षराणिः पदसमूहाःवाक्यानिवाअंगानिइत्यादीनियस्यतंपादांगं संधयःशाह्निकप्रसिद्धाः पर्वाणिअंगुल्यादिकांडानि स्व

यःसुपर्णोयजुर्नामछंदोगात्रस्त्रिवृच्छिराः रथंतरंबृहत्सामतस्मैस्तोत्रात्मनेनमः ४४ यःसह
स्रसमेसत्रेजज्ञेविश्वसृजामृषिः हिरण्यपक्षःशकुनिस्तस्मैहंसात्मनेनमः ४५ पादांगंसंधिपर्वाणं
स्वरव्यंजनभूषणं यमाहुरक्षरंदिव्यंतस्मैवागात्मनेनमः ४६ यज्ञांगोयोवराहोवैभूत्वागामुज्जहार
ह लोकत्रयहितार्थायतस्मैवीर्यात्मनेनमः ४७ यःशेतेयोगमास्थायपर्यंकेनागभूषिते फणा
सहस्ररचितेतस्मैनिद्रात्मनेनमः ४८ यस्तनोतिसतांसेतुमृतेनामृतयोनिना धर्मार्थव्यवहारांगै
स्तस्मैसत्यात्मनेनमः ४९ यंपृथग्धर्मचरणाःपृथग्धर्मफलैषिणः पृथग्धर्मैःसमर्चंतितस्मैधर्मा
त्मनेनमः ५० यतःसर्वेप्रसूयंतेह्यनंगात्मांगदेहिनः उन्मादःसर्वभूतानांतस्मैकामात्मनेनमः

राः अचःव्यंजनानिहलः ४६ ४७ सेतुंतरणोपायंयोगायधर्ममृतेनवेदोक्तेनउपायेनअमृतयोनिनामोक्षहेतुना धर्मार्थप्रवनत्वर्थ
कामार्थःव्यवहारोवावागादिपरिस्पंदः तदर्थानिअंगानितैःजितैरिंद्रियैरित्यर्थः ४९ धर्मैःपाशुपतपंचरात्रादितंत्रोक्तैः ५० अनंगा
त्मानिकाममयानिअंगानियस्यसः अनंगात्मांगः सचासौदेहीचतस्यअनंगात्मांगदेहिनः ५९ ॥

व्यक्तस्थंदेहांतस्थं क्षेत्रेबुद्धौ ५२ आत्मानंचेतनंआत्मस्थंनित्यस्वरूपस्थितमपिषोडशभिर्गुणैःप्राणाकार्यैरेकादशभिरिंद्रियैः
पंचभिर्भूतैश्चत्रिधात्मा जाग्रत्स्वप्नसुषुप्तिषुउदासतत्रप्रसप्तमरूपैर्वृतं ५३ ५७ ततःपुष्करंयस्यनाभ्यांसंभूतंयस्मिन्विश्वंप्रतिष्ठितं ५८ चतु

यंचव्यक्तस्थमव्यक्तंविचिन्वंतिमहर्षयः क्षेत्रेक्षेत्रज्ञमासीनंतस्मैक्षेत्रात्मनेनमः ५२ यंत्रिधात्मा
नमात्मस्थंवृतंषोडशभिर्गुणैः प्राहुःसप्तदशंसांख्यास्तस्मैसांख्यात्मनेनमः ५३ यंविनिद्राजि
तश्वासाःसत्वस्थाःसंयतेंद्रियाः ज्योतिःपश्यंतियुंजानास्तस्मैयोगात्मनेनमः ५४ अपुण्यपापा
क्षयेयंपुनर्भवनिर्भयाः शांताःसंन्यासिनोयांतितस्मैमोक्षात्मनेनमः ५५ योसौयुगसहस्रांतेप्रदी
प्तार्चिर्विभावसुः संभक्षयतिभूतानितस्मैघोरात्मनेनमः ५६ संभक्ष्यसर्वभूतानिकृत्वाचैका
र्णवंजगत् बालःस्वपितियश्चैकस्तस्मैमायात्मनेनमः ५७ अजस्यनाभौसंभूतंयस्मिन्विश्वंप्रति
ष्ठितं पुष्करेपुष्कराक्षस्यतस्मैपद्मात्मनेनमः ५८ सहस्रशिरसेचैवपुरुषायामितात्मने चतुःसमु
द्रपर्याययोगनिद्रात्मनेनमः ५९ यस्यकेशेषुजीमूतानद्यःसर्वांगसंधिषु कुक्षौसमुद्राश्चत्वारस्त
स्मैतोयात्मनेनमः ६० यस्मात्सर्वाःप्रसूयंतेसर्गप्रलयविक्रियाः यस्मिंश्चैवप्रलीयंतेतस्मैहेत्वा
त्मनेनमः ६१ ॥

र्णःप्रस्वपनरूपविच्छिन्नोदाराणांसमुद्राणांकामानांपर्यायःसर्वात्मनानिर्गमनंयस्याःसायोग
निद्रातदात्मनेकामंसमुद्रमाविशंतिमंत्रवर्णात्समुद्रःकामः ५९ ६० ६१ ॥

रात्रौ स्वप्ने निषण्णः प्रपन्नस्तु स्वप्नः स्यादित्यर्थः दिवा जाग्रत्स्वप्नयोः विष्ठितः कर्तृरूपेण तद्विपरीतेन स्थितः वस्तुतस्तु इष्टानिष्ट
कर्ता ६२ अकुण्ठं अनिरुद्धं ६३ पंचधा प्राणादिरूपेण ६४ ६५ युगेषु कृतादिषु आवर्त्तते मत्स्यादिरूपेण किं कर्मवशोऽयं नेत्या
ह योगैरिति योगमायाबलेन नटवदित्यर्थः ६६ ६८ एतत् हिरण्यगर्भात्परो मायावी परतरस्तु स्वयं शुद्धः ६९ विषयेषु श्रोत्रादिगो

यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ६२ अकुण्ठं सर्वा
कार्येषु धर्मकार्यार्थमुद्यतं वैकुण्ठस्य च यद्रूपं तस्मै कार्यात्मने नमः ६३ त्रिःसप्तकृत्वो यः क्षत्रं धर्म
व्युत्क्रान्तगौरवं क्रुद्धो निजघ्ने समरे तस्मै क्रौर्यात्मने नमः ६४ विभज्य पंचधात्मानं वायुर्भूत्वा शरीरगः
यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ६५ युगेष्वावर्त्तते योगैर्मासर्त्वयनहायनैः सर्गप्रलययोः
कर्त्ता तस्मै कालात्मने नमः ६६ ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः पादौ यस्याश्रिताः शूद्रास्तस्मै
वर्णात्मने नमः ६७ यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै
लोकात्मने नमः ६८ परः कालात्परो यज्ञात्परात्परतरश्च यः अनादिरादिर्विश्वस्य तस्मै विश्वा =
त्मने नमः ६९ विषये वर्त्तमानानां यं ते वैशेषिकैर्गुणैः प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ७

चरे वर्त्तमानानां अनादरे षष्ठी तान् अनादृत्य वैशेषिकैर्गुणैः विशेषजैः रागद्वेषैः यं विषयगोप्तारं प्राहुः यत्र रागस्तमेवार्थं वा स्वरूपेण
मनसि रक्षन् संसरति न तु सर्वमित्यर्थः ७० ॥

७१ अंतर्भूतः अंतःप्रविष्टः ७२ इन्द्रात्मनेन्द्रसिंहाय ७३ ७४ ७५ आत्मेति शब्दादिविषयकोयोबाधःसविषयमनंतर्भा
वआत्मस्वरूपभूतमेवज्ञानं यथोक्तं परागर्थप्रमेयेषुयाफलत्वेनसंमता संवित्सैवेहमेयोर्थोवेदांतोक्तिप्रमाणतइति ६

अन्नपानेंधनमयोरसप्राणविवर्द्धनः योधारयतिभूतानितस्मैप्राणात्मनेनमः ७१ प्राणानां
धारणार्थाययोन्नंभुंक्तेचतुर्विधं अंतर्भूतःपचत्यग्निस्तस्मैपाकात्मनेनमः ७२ पिंगेक्षणसटं
यस्यरूपंदंष्ट्रानखायुधं दानवेंद्रांतकरणंतस्मैइन्द्रात्मनेनमः ७३ यंनदेवानगंधर्वानदैत्या
नचदानवाः तत्वतोहिविजानंतितस्मैसूक्ष्मात्मनेनमः ७४ रसातलगतःश्रीमानंनंतोभ
गवान्विभुः जगद्धारयतेकृत्स्नंतस्मैवीर्यात्मनेनमः ७५ योमोहयतिभूतानिस्नेहपाशानुबंध
नैः सर्गस्यरक्षणार्थायतस्मैमोहात्मनेनमः ७६ आत्मज्ञानमिदंज्ञानंज्ञात्वापंचस्ववस्थितं
यंज्ञानेनाभिगच्छंतितस्मैज्ञानात्मनेनमः ७७ अप्रमेयशरीरायसर्वतोबुद्धिचक्षुषे अनंतपा
रिमाणायतस्मैदिव्यात्मनेनमः ७७ जटिनेदंडिनेनित्यंलंबोदरशरीरिणे कमंडलुनिषंगाय
तस्मैब्रह्मात्मनेनमः ७८ शूलिनेत्रिदशेशायत्र्यंबकायमहात्मने भस्मदिग्धाङ्गलिंगायत
स्मैरुद्रात्मनेनमः ७९ ॥

इदमेवज्ञानेनज्ञानसाधनेनवाक्येन ७६ अप्रमेयंअगोचरंशरीरंस्वरूपंयस्य अनंत
अपारंपरिमेयंविषयजातंयत्रतस्मै ७७ कमंडलुनिषंगायतज्जलैरेववाणभूतैरसुराननाशयेत्यर्थः ७८ ७९ ॥

८० भूतादेरहंकारस्यनिधनंमरणंतस्मै ८१ ८२ अपवर्गोस्यनित्यमुक्तः यतःभूतेभ्यःपरः ८३ त्रिषुलोकेषुतेभ्यःपरतश्चविद्यमानाय

वेदार्द्धकृतशीर्षायव्यालयज्ञोपवीतिने पिनाकशूलहस्तायतस्माउग्रात्मनेनमः ८० सर्वभूतात्मभूता
यताद्दिनिधनायच अक्रोधद्रोहमोहायतस्मैशांतात्मनेनमः ८१ यस्मिन्सर्वंयतःसर्वंयःसर्वसर्वतश्च
यः यश्चसर्वमयोनित्यंतस्मैसर्वात्मनेनमः ८२ विश्वकर्मन्नमस्तेस्तुविश्वात्मन्विश्वसंभव अपवर्गोसि
भूतानांपंचानांपरतस्थितः ८३ नमस्तेत्रिषुलोकेषुनमस्तेपरतस्त्रिषु नमस्तेदिक्षुसर्वासुत्वंहिसर्वम
योनिधिः ८४ नमस्तेभगवन्विष्णोलोकानांप्रभवाव्यय त्वंहिकर्त्ताहृषीकेशसंहर्त्ताचापराजितः ८५
नहिपश्यामितेभावंदिव्यंहित्रिषुवर्त्मसु त्वांतुपश्यामितत्वेनयत्तेरूपंसनातनं ८६ दिवंतेशिर
साव्याप्तंपद्भ्यांदेवीवसुंधरा विक्रमेणत्रयोलोकाःपुरुषोसिसनातनः ८७ दिशोभुजारविश्चक्षु
वीर्यंशुक्रःप्रजापतिः सप्तमार्गानिरुद्धास्तेवायोरमिततेजसः ८८ अतसीपुष्पसंकाशंपीतवास
समच्युतं येनमस्यंतिगोविंदंनतेषांविद्यतेभयं ८९ एकोपिकृष्णस्यकृतःप्रणामोदशाश्वमे
धावभृथेनतुल्यः दशाश्वमेधीपुनरेतिजन्मकृष्णप्रणामीनपुनर्भवाय ९० ॥

तेत्रिषुकालेषुनमः ८४

८५ वर्त्मसुवर्त्तमानादिषु ८६ दिवंद्यौः ८७ सप्तउपरितनानिच्छिद्राणि प्रवहादयोवासर्वत्रयैवव्याप्तमित्यर्थः ८८ ८९ ॥

श्री॰
मा॰रा॰
टी॰
८९

८१ ८९ भीष्मायज्ञानंदत्वापुनःस्वदेहंप्रतिशयनस्थानेययौ आगतवान् तदायुधिष्ठिरेणप्रबोधितःसमुत्थितश्चेत्यर्थः ९० विदित्वा

कृष्णव्रताःकृष्णमनुस्मरंतोरात्रौचकृष्णंपुनरुत्थितायेतेकृष्णदेहाःप्रविशंतिकृष्णमाज्यंयथामंत्रहु
तंहुताशे ८१ नमोनरकसंत्रासरक्षामंडलकारिणे संसारनिम्नगावर्त्ततरिकाष्ठायविष्णवे नमोब्र
ह्मण्यदेवायगोब्राह्मणहितायच जगद्धितायकृष्णायगोविंदायनमोनमः ८३ प्राणकांतारपाथेयं
संसारोच्छेदभेषजं दुःखशोकपरित्राणंहरिरित्यक्षरद्वयं ८४ यथाविष्णुमयंसत्यंयथाविष्णुमयं
जगत् यथाविष्णुमयंसर्वंपाप्मामेनश्यतांतथा ८५ त्वांप्रपन्नायभक्तायगतिमिष्टांजिगीषवे य
च्छ्रेयःपुंडरीकाक्षतद्ध्यायस्वसुरोत्तम ८६ इतिविद्यातपोयोनिरयोनिर्विष्णुरीडितः वाग्यज्ञेना
र्चितोदेवःप्रीयतांमेजनार्दनः ८७ नारायणःपरंब्रह्मनारायणःपरंतपः नारायणःपरोदेवः
सर्वंनारायणःसदा ८८ वैशंपायनउवाच एतावदुक्त्वावचनंभीष्मस्तद्गतमानसः नमइत्येवकृ
ष्णायप्रणाममकरोत्तदा ८९ अभिगम्यतुयोगेनभक्तिंभीष्मस्यमाधवः त्रैकाल्यदर्शनंज्ञानंदि
व्यंदत्वाययौहरिः ९० तस्मिन्नुपरतेशब्देततस्तेब्रह्मवादिनः भीष्मंवाग्भिर्बाष्पकंठास्तमानर्चुर्महा
मतिं १ तेस्तुवंतश्चविप्राग्र्याःकेशवंपुरुषोत्तमं भीष्मंचशनकैःसर्वेप्रशशंसुःपुनःपुनः विदि
त्वाभक्तियोगंतुभीष्मस्यपुरुषोत्तमः २ ॥

योगबलेनज्ञात्वा ९१ ९२ ॥

९३ ९४ ९५ मुदितमनाअभ्यनंदतेतिसंबंधिरार्थः ९६ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरि

सहसोत्थायसंहृष्टोयानमेवान्वपद्यत केशवःसात्यकिश्चापिरथेनैकेनजग्मतुः ९३ अपरेणमहात्मा
नौयुधिष्ठिरधनंजयौ भीमसेनोयमौचोभौरथमेकंसमाश्रिताः ९४ कृपोयुयुत्सुःसूतश्चसंजयश्चप
रंतपः तेरथैर्नगराकारैःप्रयाताःपुरुषर्षभाः ९५ नेमिघोषेणमहताकंपयंतोवसुंधरां ९६ ततो
गिरःपुरुषवरस्तवान्विताद्विजेरिताःपथिसुमनाःसशुश्रुवे कृतांजलिंप्रणतमथापरंजनंसकेशि
हामुदितमनाभ्यनंदत ९७ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मेस्तवराजः ४७ वैशंपायनउ०
ततःसचहृषीकेशःसचराजायुधिष्ठिरः कृपादयश्चतेसर्वेचत्वारःपांडवाश्चते १ रथैस्तैर्नगराश्रा
कैःपताकाध्वजशोभितैः ययुराशुकुरुक्षेत्रंवाजिभिःशीघ्रगामिभिः २ तेवतीर्यकुरुक्षेत्रंकेशम
ज्जास्थिसंकुलं देहन्यासःकृतोयत्रक्षत्रियैस्तैर्महात्मभिः ३ गजाश्वदेहास्थिचयैःपर्वतैरिवसंचितं
नरशीर्षकपालैश्चशंखैरिवचसर्वशः ४ चितासहस्रप्रचितंसर्वशस्त्रसमाकुलं आपानभूमिं
कालस्यतदाभुक्तोज्झितामिव ५ भूतसंघानुचरितंरक्षोगणनिषेवितं पश्यंतस्तेकुरुक्षेत्रंययुराशु

सूनोर्नीलकंठस्यकृतौभारतभावदीपेशांतौराजधर्मेषुभीष्मस्तवराजोनामग्रंथार्थप्रकाशःसप्तचत्वारिंशो महारथाः ६ ॥

ध्यायः ४७ ततःसच १ २ ३ ४ ५ ६ ॥

७ संतर्पयामास रामः इत्यर्थात् एतेन शत्रुकुलवधजा ग्लानिस्ते माभूदिति दर्शितं ८ ९ १० ११ १२ १३ १४ आगमो वेदः त्वत्तः त्व

गच्छन्नेव महाबाहुः सर्वयादवनंदनः युधिष्ठिराय प्रोवाच जामदग्न्यविक्रमं अमी रामह्रदाः पंच द
दृश्यंते पार्थ दूरतः येषु संतर्पयामास पितॄन् क्षत्रियशोणितैः ८ त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रि
यां प्रभुः इहेदानीं ततो रामः कर्मणो विरराम ह ९ युधिष्ठिर उ॰ त्रिःसप्तकृत्वः पृथिवी कृता निःक्ष
त्रिया पुरा रामेणेति यथात्थ त्वमत्र मे संशयो महान् १० क्षत्रबीजं यदा दग्धं रामेण यदुपुंगव कथं
भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ११ महात्मना भगवता रामेण यदुपुंगव कथमुत्सादितं क्ष
त्रं कथं वृद्धिमुपागतं १२ महता रथयुद्धेन कोटिशः क्षत्रिया हताः तथाभूच्च मही कीर्णा क्षत्रियैर्व
दतां वर १३ किमर्थं भार्गवेणेदं क्षत्रमुत्सादितं पुरा रामेण यदुशार्दूल कुरुक्षेत्रे महात्मना एत
न्मे छिंधि वार्ष्णेय संशयं तार्क्ष्यकेतन आगमो हि परः कृष्ण त्वत्तो नो वासवानुज १४ वैशंपायन उ॰
ततो यथावत्सगदाग्रजः प्रभुः शशंस तस्मै निखिलेन तत्त्वतः युधिष्ठिरायाप्रतिमौजसे तदा यथा
भवत् क्षत्रियसंकुला मही १५ इति श्रीमहाभारते राजधर्मे रामोपाख्याने ४८ वासुदेव उ॰ शृ

द्वचनात्तोपरः नाधिकः १५ १६ अष्टचत्वारिंशः शृणु कौंतेय रामस्य प्रभावो यो मया श्रुतः महर्षीणां कथय

भारतेभारतसंग्रामे २ ३ ४ ५ ६ ७ गाधेःपुत्रार्थंतस्याश्चपुत्रार्थंचरुंचरुद्वयं ८ उपयोज्याःभोज्याःभोक्तव्याः ९ १० ११ १२ १३

यथाचजामदग्न्येनकोटिशःक्षत्रियाहताः उद्भूताराजवंशेषुयेभूयोभारतेहताः २ जह्नोरजस्तु
तनयोबलाकाश्वस्तुतत्सुतः कुशिकोनामधर्मज्ञस्तस्यपुत्रोमहीपते उग्रंतपःसमातिष्ठत्स
हस्राक्षसमोभुवि पुत्रंलभेयमजितंत्रिलोकेश्वरमित्युत ४ तमुग्रतपसंदृष्ट्वासहस्राक्षःपुरंदरः
समर्थःपुत्रजननेस्वयमेवाभ्यपद्यत ५ पुत्रत्वमगमद्राजंस्तस्यलोकेश्वरेश्वरः गाधिर्नामाभवत्पुत्रः
कौशिकःपाकशासनः ६ तस्यकन्याभवद्राजन्नाम्नासत्यवतीप्रभो तांगाधिर्भृगुपुत्रायसोर्ची
कायददौप्रभुः ७ तस्याःप्रीतःसशौचेनभार्गवःकुरुनंदन पुत्रार्थंश्रपयामासचरुंगाधेस्त
थैवच ८ आहूयोवाचतांभार्यांसोर्चीकोभार्गवस्तदा उपयोज्यश्चरुरयंत्वयामात्राप्ययंतव ९ त
स्यांजनिष्यतेपुत्रोदीप्तिमान्क्षत्रियर्षभः अजय्यःक्षत्रियैर्लोकेक्षत्रियर्षभसूदनः तवापिपुत्रंक
ल्याणिधृतिमंतंशमात्मकं तपोन्वितंद्विजश्रेष्ठंचरुरेषविधास्यति ११ इत्येवमुक्त्वातांभार्यांसो
र्चीकोभृगुनंदनः तपस्यभिरतःश्रीमानजगामारण्यमेवहि १२ एतस्मिन्नेवकालेतुतीर्थयात्राप
रोनृपः गाधिःसदारःसंप्राप्तःसोर्चीकस्याश्रमंप्रति १३ चरुद्वयंगृहीत्वाचराजन्सत्यवतीतदा भ
र्तुर्वाक्यंतथाव्यग्रामात्रेहृष्टान्यवेदयत् १४ ॥

व्यग्राहर्षेणैव १४ ॥

श्री·
शां·रा·
टी·
४१

१६ १६ ७ व्यंसितावंचिता ८ १९ २० २२ २३ २४ २५ २६ ॥

मातातततस्याः कौंतेयदुहित्रेस्वंचरुंददौ तस्याश्चरुमथाज्ञानादात्मसंस्थंचकारह १५ अ
थसत्यवतीगर्भंक्षत्रियांतकरंतदा धारयामासदीप्तेनवपुषाघोरदर्शनं १६ तामृचीकस्त
दादृष्ट्वातस्यागर्भगतंद्विजं अब्रवीद्भृगुशार्दूलः स्वांभार्यांदेवरूपिणीं १७ मात्रासिव्यंसिता
भद्रेचरुव्यत्यासहेतुना भविष्यतिहितेपुत्रः क्रूरकर्मात्यमर्षणः १८ उत्पत्स्यतितेभ्राताब्र
ह्मभूतस्तपोरतः विश्वंहिब्रह्मसुमहच्चरौतवसमाहितं १९ तद्वीर्यंचसकलंतवमात्रेस
मर्पितं विपर्ययेणतेभद्रेनैतदेवंभविष्यति २० मातुस्तेब्राह्मणोभूयात्तवचक्षत्रियःसु
तः सैवमुक्तामहाभागाभर्त्रासत्यवतीतदा २१ पपातशिरसातस्मैवेपंतीचाब्रवीदिदं नार्हो
सिभगवन्नद्यवक्तुमेवंविधंवचः २२ ब्राह्मणापसदंपुत्रंप्राप्स्यसीतिहिमांप्रभो २२ ऋचीक
उ· नैषसंकल्पितः कामोमयाभद्रेतथात्वयि उग्रकर्माभवेत्पुत्रश्चरुव्यत्यासहेतुना २३
सत्यवत्युवाच इच्छंल्लोकानपिमुनेसृजेथाः किंपुनःसुतं शमात्मकमृजुंपुत्रंदातुमर्हसिमे =
प्रभो २४ ऋचीकउ· नोक्तपूर्वंमयाभद्रेस्वैरेष्वपिकदाचन किमुताग्निंसमाधायमंत्रवच्च ५६
रुसाधने २५ दृष्टमेतत्पुराभद्रेज्ञातंचतपसामया ब्रह्मभूतंहिसकलंपितुस्तवकुलंभवे ८

४१

२७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ चित्रभानुनाग्निना ३८ ॥

सत्यवत्युवाच काममेवंभवेत्पौत्रोममेदत्तवचश्शुभो शमात्मकमहंपुत्रंलभेयंजपतांवर २७ ऋ
चीकउ॰ पुत्रेनास्तिविशेषोमेपौत्रेचवरवर्णिनि यथात्वयोक्तंवचनेनतथाभद्रेभविष्यति २८ वासु
देवउवाच ततःसत्यवतीपुत्रंजनयामासभार्गवं तपस्यभिरतंशान्तंजमदग्निंयतव्रतं २९ विश्वामि
त्रंचदायादंगाधिःकुशिकनंदनः यंप्रापब्रह्मसंमितंविश्वैर्ब्रह्मगुणैर्युतं ३० ऋचीकोजनयामास
जमदग्निंतपोनिधिं सोपिपुत्रंह्यजनयज्जमदग्निःसुदारुणं ३१ सर्वविद्यान्तगंश्रेष्ठंयजुर्वेदस्यपार
गं रामंक्षत्रियहन्तारंप्रदीप्तमिवपावकं ३२ तोषयित्वामहादेवंपर्वतेगंधमादने अस्त्राणिव
रयामासपरशुंचातितेजसं ३३ सतेनाकुंठधारेणज्वलितानलवर्चसा कुठारेणाप्रमेयेणलोके
ष्वप्रतिमोभवत् ३४ एतस्मिन्नेवकालेतुकृतवीर्यात्मजोबली अर्जुनोनामतेजस्वीक्षत्रियोहैह
याधिपः ३५ दत्तात्रेयप्रसादेनराजाबाहुसहस्रवान् चक्रवर्तीमहातेजाविप्राणामाश्वमे
धिके ३६ ददौसपृथिवींसर्वांसप्तद्वीपांसपर्वतां स्वबाह्वस्त्रबलेनाजौजित्वापरमधर्मवित्
३७ तृषितेनचकौन्तेयभिक्षितश्चित्रभानुना सहस्रबाहुर्विक्रांतःप्रादाद्भिक्षामथाग्नये ३८ ॥

श्री·
सं· रा·
टी·
४२

वाणाग्न्यातद्भूत इति शेषः ३९ ४० अपवस्य वसिष्ठस्य ४१ दग्धेश्रमे आश्रमे ४२ ४४ पितुर्वधे वध निमित्तं आसन् ४५

ग्रामान्पुराणि राष्ट्राणि घोषाश्चैवानुवीर्य्यवान् जज्वालतस्य वाणाग्याश्चित्रभानुर्दिधक्षता ३९
सतस्य पुरुषेन्द्रस्य प्रभावेण महौजसः ददाह कार्त्तवीर्यस्य शैलानथ वनस्पतीन् ४० सशून्यमा
श्रमं रम्यमापवस्य महात्मनः ददाह पवनेनेद्धश्चित्रभानुः सहैहयः ४१ आपवस्तु ततो रोषा
च्छशापार्जुनमच्युत दग्धेश्रमे महाबाहो कार्त्तवीर्येण वीर्यवान् ४२ त्वयानवर्जितं यस्मान्ममे
दं हि महद्वनं दग्धं तस्माद्रणे रामो बाहूंस्ते च्छेत्स्यतेर्जुन ४३ अर्जुनस्तु महाबली नित्यं शमा
त्मकः ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ४४ नाचिन्तयत्तदा शापं तेन दत्तं महात्मना ते
स्य पुत्रास्तु बलिनः शापेनास्य पितुर्वधे ४५ निमित्तादवलिप्तावै नृशंसाश्चैव सर्वदा जमदग्नि
धेन्वास्ते वत्समानिन्युर्भरतर्षभ ४६ अज्ञातं कार्त्तवीर्येण हैहयेन्द्रेण धीमता तन्निमित्तमभूद्युद्ध
जामदग्न्येर्महात्मनः ४७ ततोर्जुनस्य बाहूंस्तान्छित्त्वा रामो रुषान्वितः तं भ्रमन्तं ततो वत्सं जामा
दग्न्यः स्वमाश्रमं ४८ प्रत्यानयत राजेन्द्र तेषामन्तःपुरात्प्रभुः अर्जुनस्य सुतास्ते तु संभूयाबुद्धयस्त
दा ४९ गत्वाश्रममसंबुद्धा जमदग्नेर्महात्मनः अपातयन्त भल्लाग्रैः शिरःकायान्नराधिप ५०
समित्कुशार्थं रामस्य निर्यातस्य यशस्विनः ततः पितृवधा

निमित्तात् शापादेव हेतोः ४६ ४७ ५० ५१ ॥

४२

५२ ५५ क्षेपं निंदां अशक्तो राम इति मिथ्याप्रतिज्ञः सर्वेषां क्षत्रियाणां वधाकरणात् ५९ स्तृता व्याप्ता शस्त्रं जग्राह ततः कार्यत
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमसृज्जत ततः स भृगुशार्दूलः कार्त्तवीर्यस्य वीर्यवान् ५२ विक्र
म्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः स हैहयसहस्राणि हत्वा परममन्युमान ५३ चकार भार्गवो
राजन्महीं शोणितकर्दमां स तथाशु महातेजाः कृत्वा निःक्षत्रियां महीं ५४ कृपया परया
विष्टो वनमेव जगाम ह ततो वर्षसहस्रेषु समतीतेषु केषुचित् ५५ क्षेपं संप्राप्तवांस्तत्र प्रकृ
त्या कोपनः प्रभुः विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ५६ परावसुर्महाराज क्षिप्त्वाह जन
संसदि ५७ ये ते ययातिपतने यज्ञे सन्तः समागताः प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ५८
मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि भयात्क्षत्रियवीराणां पर्वतं समुपाश्रितः सा पुनः
क्षत्रियशतैः पृथिवी सर्वतः स्तृता परावसोर्वचः श्रुत्वा शस्त्रं जग्राह भार्गवः ६० ततो ये क्षत्रिया रा
जन् शतशस्तेन वर्जिताः ते विवृद्धा महावीर्याः पृथिवीपतयो भवन् ६१ स पुनस्तान् जघा
नाशु बालानपि नराधिप गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ६२ जातं जातं स गर्भं तु पुन
रेव जघान ह अरक्षंश्च सुतान्कांश्चित्तदा क्षत्रिययोषितः ६३ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निः
क्षत्रियाणामंतं कृतवान् ६० वर्जिताः अहताः ६१ ६४ क्षत्रियां प्रभुः दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ६४

श्री·
शां·रा·
टी·
५३

स्रुकग्रहवताकरेणेतिकश्यपोऽध्वर्युः स्वकर्मान्तरएवमाथं दिनसवनेदक्षिणाकालेऽदं अब्रवीदितिसूच्यते ६५ ·· ११

क्षत्रियाणांशेषार्थंकरेणोद्दिश्यकश्यपः स्रुक्प्रग्रहवताराजंस्ततोवाक्यमथाब्रवीत्
६५ गच्छतीरंसमुद्रस्यदक्षिणस्यमहामुने नतेमद्विषयेरामवस्तव्यमिहकर्हिचित् ६६ त
तःशूर्पारकंदेशंसागरस्तस्यनिर्ममे सहसाजामदग्न्यस्यसोऽपरान्तमहीतलं ६७ कश्यपस्तां
महाराजप्रतिगृह्यवसुन्धरां कृत्वाब्राह्मणसंस्थांवैप्रविष्टःसुमहद्वनं ६८ ततःशूद्राश्चवैश्याश्च
यथास्वैरप्रचारिणः अवर्त्तन्तद्विजाग्र्याणांदारेषुभरतर्षभ ६९ अराजकेजीवलोकेदुर्बला
बलवत्तरैः पीड्यन्तेनहिवित्तेषुप्रभुत्वंकस्यचित्तदा ७० ततःकालेनपृथिवीपीड्यमानादुरा
त्मभिः विपर्ययेणतेनाशुप्रविवेशरसातलं ७१ अरक्ष्यमाणाविधिवत्क्षत्रियैर्धर्मरक्षि
भिः तांदृष्ट्वाद्रवतींतत्रसंत्रासात्समहामनाः ७२ ऊरुणाधारयामासकश्यपःपृथिवींततः
धृतातेनोरुणायेनतेनोर्वीतिमहीस्मृता ७३ रक्षणार्थंसमुद्दिश्यययाचेपृथिवीतदा प्रसा
द्यकश्यपंदेवीवरयामासभूमिपं ७४ पृथिव्युवाच सन्तिब्रह्मन्मयागुप्ताःस्त्रीषुक्षत्रियपुङ्गवाः
हैहयानांकुलेजातास्तेसंरक्षन्तुमांमुने ७५ अस्तिपौरवदायादोविदूरथसुतःप्रभो ऋक्षैःसं
वर्द्धितोविप्रऋक्षवत्यथपर्वते ७६ तथानुकम्पमानेनयज्वनामिततेजसा पराशरेणदा

= १ पाठः कौरवाणामिति विहितः

५३

द्विजः क्षत्रियोपि ७८ ८३ घोरत्वाद्विचित्रप्रासादादीन्कुर्वन्तीति घोकाराः शिल्पिनः ज्याकारेति पाठान्तरं स्पष्टार्थं ८४ ८५

सर्वकर्माणि कुरुते शूद्रवत्तस्य स द्विजः सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ७८ शिबि
पुत्रो महातेजा गोपतिर्नाम नामतः वने संवर्द्धितो गोभिः सोभिरक्षतु मां मुने ७९ प्रतर्दनस्य पुत्र
स्तु वत्सो नाम महाबलः वत्सैः संवर्द्धितो गोष्ठे स मां रक्षतु पार्थिवः ८० दधिवाहनपौत्रस्तु पुत्रो दि
विरथस्य च गुप्तः स गौतमेनासीद्गङ्गाकूलेभिरक्षितः ८१ बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः
गोलाङ्गूलैर्महाभागो गृध्रकूटेभिरक्षितः ८२ मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः मरु
त्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ८३ एते क्षत्रियदायादास्तत्र तत्र परिश्रिताः घोकारहेम
कारादिजातिं नित्यं समाश्रिताः ८४ यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला एतेषां पितर
श्चैव तथैव च पितामहाः ८५ मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा तेषामपचितिश्चैव मया
कार्या महामुने ८६ न ह्यहं कामये नित्यमतिक्रान्तेन रक्षणं वर्त्तमानेन वर्त्तेयं तत्क्षिप्रं संविधी
यतां ८७ वासुदेव उ॰ ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः अभ्यषिञ्चन्महीपालान्क्ष
त्रियान्वीर्यसंमतान् ८८ तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः एतत्ते सर्वमाख्यातं यन्मां पृ
च्छसि पाण्डव ८९

अपचितिः आनृण्यार्थं पूजा ८६ नित्यमतिक्रान्तेन यर्मातिक्रमिणा ८७ ८८ ८९ ॥

प्रकाशन्प्रकाशयन् ९० रामोपाख्यानंऊनपंचाशः ४९ ततो १ ४ तथाहृतौ तादृक गोष्ठीपयौ ५ ८ अवस्कंद्य अवरुह्य वाहे

वैशंपायन उ० एवंस्तुवंस्तंचयदुप्रवीरोयुधिष्ठिरंधर्मभृतांवरिष्ठं रथेनतेनाशुययौमहात्मादिशःप्रकाशन्भगवानिवार्कः ९० इतिशांतिपर्वणिराजधर्मेरामोपाख्याने ४९ वैशंपायन उ० ततोरामस्यतत्कर्मश्रुत्वाराजायुधिष्ठिरः विस्मयंपरमंगत्वाप्रत्युवाचजनार्दनं १ अहोरामस्यवार्ष्णेयशक्रस्येवमहात्मनः विक्रमोवसुधायेनक्रोधान्निःक्षत्रियाकृता २ गोभिःसमुद्रगुप्ताश्चगोलांगूलर्क्षवानरैः गुप्तारामभयोद्विग्नाःक्षत्रियाणांकुलोद्वहाः ३ अहोधन्योहिलोकोयंसभाग्याश्चनराभुवि यत्रकर्मेदृशंधर्म्यंद्विजेनकृतमित्युत ४ कथयंतौकथांतातौततोवच्युतयुधिष्ठिरौ जग्मतुर्यत्रगांगेयःशरतल्पगतःप्रभुः ५ ततस्तेददृशुर्भीष्मंशरप्रस्तरशायिनं स्वरश्मिजालसंवीतंसायंसूर्यसमप्रभं ६ उपास्यमानंमुनिभिर्देवैरिवशतक्रतुं देशेपरमधर्मिष्ठेनदीमोघवतीमनु ७ दूरादेवतमालोक्यकृष्णोराजाचधर्मजः चत्वारःपांडवाश्चैवतेचशारद्वतादयः ८ अवस्कंद्याथवाहेभ्यःसंयम्यप्रचलंमनः एकीकृत्येंद्रियग्राममुपतस्थुर्महामुनीन् ९ अभिवाद्यतुगोविंदःसात्यकिस्तेचपार्थिवाः व्यासादीनृषिमुख्यांश्चगांगेयमुपतस्थिरे १० ॥

भ्यःवाहनेभ्यः ९ ९ ॥

१ निशाम्य आलोच्य २ ४ छंदमृत्युः स्वेच्छामरणः एतत्छंदमृत्युतायाः कारणं पितृतोषणं ममापि न किमुतान्येषा
मित्यर्थः ५ ६ कामं एतन्न युक्तमिति शेषः सर्वज्ञस्यापि तवोपदेशो न युक्त इत्यर्थः ७ प्रतिष्ठितं वृद्धाविति शेषः ८ ९

तपोवृद्धं तथा दृष्ट्वा गांगेयं यदुकौरवाः परिवार्य ततः सर्वे निषेदुः पुरुषर्षभाः १ ततो निशा
म्य गांगेयं शाम्यमानमिवानलं किंचिद्दीनमना भीष्ममिति होवाच केशवः २ कच्चिज्ज्ञा
नानि सर्वाणि प्रसन्नानि यथा पुरा कच्चिन्न व्याकुला चैव बुद्धिस्ते वदतां वर ३ शराभिघातदुः
खात्ते कच्चिद्गात्रं न दूयते मानसादपि दुःखाद्धि शरीरं बलवत्तरं ४ वरदानात्पितुः कामं छं
दमृत्युरसि प्रभो शांतनोर्धर्मनित्यस्य न तत्तव मम कारणं ५ सुसूक्ष्मोपि तु देहे वै शल्यो
जनयते रुजं किं पुनः शरसंघातैश्चितस्य तव पार्थिव ६ कामं नैतत्तवाख्येयं प्राणिनां प्रभ
वाप्ययौ उपदेष्टुं भवाञ्छक्तो देवानामपि भारत ७ यद्भूतं भविष्यं च भवच्च पुरुषर्षभ स
र्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितं संहारश्चैव भूतानां धर्मस्य च फलोदयः विदितस्ते म
हाप्राज्ञ त्वं हि धर्ममयो निधिः ९ त्वां हि राज्ये स्थितं स्फीते समग्रांगमरोगिणं स्त्रीसहस्रैः प
रिवृतं पश्यामीवोर्द्ध्वरेतसं २० ऋते शांतनवाद्भीष्मात्त्रिषु लोकेषु पार्थिव सत्यधर्मान्महावी
र्याच्छूराद्धर्मैकतत्परात् २१

पश्यामीवेति वशाद्व्रातप्रतिज्ञातः ऊर्ध्वरेतस्त्वं नासीदिति भावः २० भीष्मादृते
मृत्युमावार्य स्थितं किमपि निसर्गप्रभवं जानीम तत्सत्त्वं न शुश्रुमेति द्वयोः संबंधः २१ ॥

श्री॰
शां॰रा॰
टी॰
५५

२२ २३ २४ २५ वसूनामष्टानांश्रेष्ठोयदितोनवमःगुणैरनवमश्च २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ॥

सत्तुमावार्यतपसाशरसंमत्तरवधायिनः निसर्गप्रभवंकिंचिन्नचतातानुशुश्रुम २२ सत्येतपसि
दानेचयज्ञाधिकरणेतथा धनुर्वेदेचवेदेचनित्यंचैवान्ववेक्षणे अनृशंसंशुचिंदान्तंसर्वभूतहितेर
तं महारथंत्वत्सदृशंनकंचिदनुशुश्रुम २४ त्वंहिदेवान्सगन्धर्वान्सासुरान्यक्षराक्षसान् शक्तएके
नरथेनैवविजेतुंनात्रसंशयः २५ सत्वंभीष्ममहाबाहोवसूनांवासवोपमः नित्यंविप्रैःसमाख्या
तोनवमोनवमोगुणैः २६ अहंचत्वाभिजानामियस्त्वंपुरुषसत्तम त्रिदशेष्वपिविख्यातस्त्वंशा
क्त्यापुरुषोत्तम २७ मनुष्येषुमनुष्येन्द्रनदृष्टोनचमेश्रुतः भवतोयोगुणैस्तुल्यःपृथिव्यांपुरुषः
क्वचित् २८ त्वंहिसर्वैर्गुणैराजन्देवानप्यतिरिच्यसे तपसाहिभवान्शक्तःस्रष्टुंलोकांश्चराचरान्
२९ किंपुनश्चात्मनोलोकानुत्तमानुत्तमैर्गुणैः तदस्यतप्यमानस्यज्ञातीनांसंक्षयेणवै ३० ज्येष्ठ
स्यपाण्डुपुत्रस्यशोकंभीष्मव्यपानुद येहिधर्माःसमाख्याताश्चातुर्वर्ण्यस्यभारत ३१ चातुराश्रम्य
संयुक्ताःसर्वेतेविदितास्तव चातुर्विद्येचयेप्रोक्ताश्चातुर्होत्रेचभारत ३२ योगेसांख्येचनियताये
चधर्माःसनातनाः चातुर्वर्ण्यस्ययश्चोक्तोधर्मोनस्मविरुध्यते ३३ सेव्यमानःसेव्यमानः॥
सचैवाद्यगाङ्गेयविदितस्तव प्रतिलोमप्रसूतानांवर्णानांचैवयःस्मृतः ३४

५५

३५ ३६ ३७ ३८ पंचाशत्तमः ५० श्रुत्वा १ नमस्तेइत्यादयोष्टौश्लोकास्तवराजेव्याख्याताः २ ३ ४ ५ ६ ७ ॥

देशजातिकुलानांचजानीषेधर्मलक्षणं वेदोक्तोयश्चशिष्टोक्तःसदैवविदितस्तव ३५ इतिहास
पुराणार्थाःकार्त्स्न्येनविदितास्तव धर्मशास्त्रंचसकलंनित्यंमनसितेस्थितं ३६ येचकेचनलो
केस्मिन्नर्थाःसंशयकारकाः तेषांछेत्तानास्तिलोकेत्वदन्यःपुरुषर्षभ ३७ सपांडवेयस्यमनःसमु
त्थितंनरेंद्रशोकंव्यपकर्षमेधया भवद्वियास्तमबुद्धिविस्तराविमुह्यमानस्यनरस्यशांतये ३८ इति
श्रीशांतौराजधर्मेपंचाशत्तमः ५० वैशंपायनउ० श्रुत्वातुवचनंभीष्मोवासुदेवस्यधीमतः किं
चिदुन्नाम्यवदनंप्रांजलिर्वाक्यमब्रवीत् १ भीष्मउवाच नमस्तेभगवन्कृष्णलोकानांप्रभवाप्य
य त्वंहिकर्ताहृषीकेशसंहर्ताचापराजितः २ विश्वकर्मन्नमस्तेस्तुविश्वात्मन्विश्वसंभव अपव
र्गोस्थभूतानांपंचानांपरतःस्थितः ३ नमस्तेत्रिषुलोकेषुनमस्तेपरतस्त्रिषु योगीश्वरनमस्तेस्तु
त्वंहिसर्वपरायणः ४ मत्संश्रितंयदात्थत्वंवचःपुरुषसत्तम ५ तेनपश्यामितेभावान्दि
व्यान्हित्रिषुवर्त्मसु तच्चपश्यामिगोविन्दयत्तेरूपंसनातनं ६ सप्तमार्गानिरुद्धास्तेवायोरमि
ततेजसः दिवंतेशिरसाव्याप्तंपद्भ्यांदेवीवसुंधरा ७ ॥

श्री॰
शां॰ रा॰
टी॰
९६

८ १४ पंचाशतं षट् चेति तव जीवितस्यावधिभूतानां दिनानां शेषं पंच षट् च पंच च वारमावर्त्तिताः षडिति त्रिंशदिति ज्ञेयं तावदेव आ
शतं शतावधि यद्दिनानां शतेन कर्त्तुं शक्यं तत् त्रिंशतापि कर्त्तुं शक्यमित्यर्थः अष्टपंचाशतं रात्र्यः शयानस्याद्य मे गता इति भीष्मो व
क्ष्यति तत्र त्रिंशदतः परं शिष्टाः अष्टाविंशतिरितः पूर्वं व्यतीतास्तथा हि भीष्मस्य शरतल्पशयनानन्तरं अष्टौ दिनानि युद्धं ततोऽर्ज्यो

द्विषो भुजो वरविश्वस्त्वद्वीर्यशङ्कः प्रतिष्ठितः अतसीपुष्पसंकाशं पीतवाससमच्युतं ८ वपुर्ह्यनु
मिमीमस्ते मेघस्येव सविद्युतः त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे यच्छेयः पुण्डरीका
क्ष पुरुषोत्तम ९ वासुदेव उ॰ यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ ततो मया वपु
र्दिव्यं तव राजन् प्रदर्शितं १० न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च दर्शयाम्यहमात्मानं
न चाशान्ताय भारत ११ भवांस्तु मम भक्तश्च नित्यं चार्जवमास्थितः दमे तपसि सत्ये च दाने च
निरतः शुचिः १२ अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव तव ह्युपस्थिता लोका येभ्यो नाव
र्त्तते पुनः १३ पंचाशतं षट् च कुरुप्रवीर शेषं दिनानां तव जीवितस्य ततः शुभैः कर्मफ
लोदयैस्त्वं समेष्यसे भीष्म विमुच्य देहं १४ ॥

यनाशौचं युयुत्सोः षोडश दिनानि तेन सह चतुर्विं
शतिः पाण्डवानामपि तावन्ति दिनानि गतानि पंचविंशे सर्वेषां श्राद्धदानं षड्विंशे पुरप्रवेशः सप्तविंशे राज्याभिषेकः अष्टाविंशे
प्रकृतिसान्त्वने आभ्युदयिके दाने च ऊनत्रिंशे भीष्मप्रत्यागमनं तद्दिनमारभ्य त्रिंशद्दिनानि शिष्टानीति ज्ञेयं १४ ॥

प्रतिपालयंति प्रतीक्षंते पतंगः सूर्यं १५ कालवशं जगत् प्रपन्ने प्राप्ते सति शेषः १६ १७ १८ एकपंचाशत्तमः ५१
ततः १ २ नैतद्वैववाक्यं तव सन्निधौ वाचो गतं वाचां विषयः सर्वोपि त्वद्वाचि वेदे ३ यद्येति हिते प्रिये इह परत्र च सर्वत्रैका

पते हि देवा वसवो विमानान्यास्थाय सर्वे ज्वलिताग्निकल्पाः अंतर्हितास्त्वां प्रतिपालयंति काष्ठां
प्रपद्यंतमुदक् पतंगं १५ व्यावर्तमाने भगवत्युदीचीं सूर्ये जगत्कालवशं प्रपन्ने गंतासि लोका
न् पुरुषप्रवीरनावर्तते यानुपलभ्य विद्वान् १६ अमुं च लोकं त्वयि भीष्म याते ज्ञानानि नंक्ष्यंत्यखि
लेन वीर अतस्तु सर्वे त्वयि सन्निकर्षं समागता धर्मविवेचनाय १७ तज्ज्ञातिशोकोपहतश्रुता
य सत्याभिसंधाय युधिष्ठिराय प्रब्रूहि धर्मार्थसमाधियुक्तमर्थ्यं वचोस्यापनुदाशु शोकं १८
इति श्रीमहाभारते शांतौ राजधर्मे ५१ वैशंपायन उ० ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हि
तं श्रुत्वा शांतनवो भीष्मः प्रत्युवाच कृतांजलिः १ लोकनाथ महाबाहो शिव नारायणाच्यु
त तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः २ किं चाहमभिधास्यामि वाक्यं ते तव सन्निधौ
यदा वाचोगतं सर्वं तव वाचि समाहितं ३ यच्च किंचित्कृतं लोके कर्तव्यं क्रियते च यत् त्व
त्तस्तन्निःसृतं देव लोके बुद्धिमतो हि तत् ४ कथयेद्देवलोकं यो देवराजसमीपतः धर्मकामा
र्थमोक्षाणां सोर्थं ब्रूयात्तवाग्रतः शराभितापाद्व्यथितं मनो मम मधुसूदन गात्राणि चावसी

लिंकं त्वत्तो निःसृतमिति उक्तेर्थे हेतुः कृत्वाः ४ ५ ६ ॥

७ ८ ९ १० ११ १२ १३ १४ १५ १६ आसक्तिः अवसन्नता ७ ९ १४ ॥

नचमेप्रतिभाकाचिदस्तिकिंचित्प्रभाषितुं पीड्यमानस्यगोविंदविषानलसमैःशरैः ७
बलंमेप्रजहातीवप्राणाःसंतप्यंतिच मर्माणिपरिकृंतंतिश्रांतचित्तस्तथाह्यहं ८ दौर्ब
ल्यात्सज्जतेवाङ्मेकथयत्कथंगतस्यह साधुमेत्वंप्रसीदस्वदाशार्हकुलवर्द्धन ९ ततस्तमस्वम
हाबाहोनब्रूयांकिंचिदच्युत नत्वंनियोगसीदेद्वाचस्पतिरपिब्रुवन् १० नदिशःसंप्रजाना
मिनाकाशंनचमेदिनी केवलंतववीर्येणतिष्ठामिमधुसूदन ११ स्वयमेवभवांस्तस्माद्धर्मरा
जस्ययद्धितं तद्ब्रवीत्वाशुसर्वेषामागमानांत्वमागमः १२ कथंत्वयिस्थितेकृष्णशाश्वतेलो
ककर्तरि प्रब्रूयान्मद्विधःकश्चिद्गुरौशिष्यइवस्थिते १३ वासुदेवउ॰ उपपन्नमिदंवाक्यंकौ
रवाणांधुरंधरे महावीर्यमहासत्वस्थिरेसर्वार्थदर्शिनि १४ यत्त्वमामात्थगांगेयबाणघात
रुजेप्रति गृहाणात्रवरंभीष्ममत्प्रसादकृतंप्रभो १५ नतेग्लानिर्नतेमूर्च्छानदाहोनचतेरुजा
प्रभविष्यतिगांगेयक्षुत्पिपासेनचाप्युत १६ ज्ञानानिचसमग्राणिप्रतिभास्यंतितेनघ
नचतेक्वचिदासक्तिर्बुद्धेःप्रादुर्भविष्यति १७ सत्वस्थंचमनोनित्यंतवभीष्मभविष्यति र
जस्तमोभ्यांरहितंघनैर्मुक्तइवोडुराट् १८ यद्यच्चधर्मसंयुक्तमर्थयुक्तमथापिच चिंतयि
ष्यसितत्राग्र्याबुद्धिस्तवभविष्य ति १९ ॥

२० संस्मरंतं संस्मरत २१ २२ २३ २४ २५ २६ २८ २९ ३० ३१ ॥

इमं च राजशार्दूलभूतग्रामं चतुर्विधं चतुर्दिक्षु समाश्रित्य द्रष्टुमर्हस्यमितविक्रम २० संस्मरंतं प्रजा
जालं संयुक्तोत्तानचक्षुषा भीष्मं द्रष्टुमसि तेवनजलं मीनश्वामले २१ वैशंपायनउ॰ ततस्ते व्यास
सहिताः सर्वएव महर्षयः ऋग्यजुःसामसंहितैर्वचोभिः कृष्णमर्चयत् २२ ततः सार्वत्तवं दिव्यं
पुष्पवर्षं नभस्तलात् पपात यत्र वार्ष्णेयः सगांगेयः सपांडवः २३ वादित्राणि च सर्वाणि जगुश्चाप्स
रसां गणाः न चाहितमनिष्टं च किंचित्तत्र प्रदृश्यते ववौ शिवः सुखो वायुः सर्वगंधवहः शुचिः शां
तायां दिशि शान्ताश्च प्राइवन्मृगपक्षिणः २५ ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः दहन्विन
मिवैकांतें प्रतीच्यां प्रत्यदृश्यत २६ ततो महर्षयः सर्वे समुत्थाय जनार्दनं भीष्ममामंत्रयांचक्रू राजा
नं च युधिष्ठिरं ततः प्रणाममकरोत्केशवः सहपांडवः सात्यकिः संजयश्चैव स च शारद्वतः कृपः
ततस्ते धर्मनिरताः सम्यक्तैरभिपूजिताः श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरितायुः २९ तथैवा
मंत्र्य गांगेयं केशवः पांडवास्तथा प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ३० ततो रथैः
कांचनचित्रकूवरैर्महीधराभैः समदैश्च दंतिभिः हयैः सुपर्णैरिव चाशुगामिभिः पदातिभिः प
दातिभिश्चात्तशरासनादिभिः ३१ ॥

श्री०
शां०रा०
टी०
५८

३२ ३३ ३४ द्विपंचाशत्तमः ५२ ततः शयनं १ २ ३ ४ ५ ६ ७ ८ ॥

ययौरथानांश्वतोहिमावभृत्तथैवपश्चादतिमात्रसारिणी श्रुत्वाप्यवाच्ययथामहानदीतभृत्तवंतं
गिरिमित्यनर्मदा ३२ ततःपुरस्ताद्भगवान्निशाकरःसमुत्थितस्तामभिहर्षयंश्चमूं दिवाकरापीत
रसामहौषधीःपुनःस्वकेनैवगुणेनयोजयन् ३३ ततःपुरंसुरपुरसंमितंयुतिप्रविश्यतेयदुवृषपांड
वास्तदा यथोचितान्भवनवरान्समाविशन्श्रमान्विताम्बृगपतयोगुहाइव ३४ इतिश्रीमहाभार
तेशांतौराजधर्मे ५२ वैशंपायनउ० ततःशयनमाविश्यप्रसुप्तोमधुसूदनः याममात्रार्धशेषायां
मिन्यांप्रत्यबुध्यत १ सध्यानपथमाविश्यसर्वज्ञानानिमाधवः अवलोक्यततःपश्चाद्दध्यौब्रह्मसना
तनं २ ततःस्तुतिपुराणज्ञारक्तकंठाःसुशिक्षिताः अस्तुवन्विश्वकर्माणंवासुदेवंप्रजाप
तिं ३ पठंतिपाणिस्वनिकास्तथागायंतिगायनाः शंखानकमृदंगाश्चप्रवाद्यंतसहस्रशः ४ वी
णापणववेणूनांस्वनश्चातिमनोरमः प्रहासइवविस्तीर्णःशुश्रुवेतस्यवेश्मनः ५ ततोयुधि
ष्ठिरस्यापिराज्ञोमंगलसंहिताः उच्चेरुर्मधुरावाचोगीतवादित्रनिःस्वनाः ६ ततउत्थायदाशार्हः
स्नातःप्रांजलिरच्युतः जप्त्वागुह्यंमहाबाहुरग्नीनाश्रित्यतस्थिवान् ७ ततःसहस्रंविप्राणांचतु
र्वेदविदांतथा गवांसहस्रेणैकैकंवाचयामासमाधवः ८ ॥

मंगलानांगवादीनामालंभनंस्पर्शं १ ९ ११ ११ १२ १३ १४ १५ १६ १७ १८ १९ २० ॥

मंगलालभनंकृत्वाआत्मानमवलोक्यच आदर्शेविमलेकृष्णस्ततःसात्यकिमब्रवीत् १ गा
च्छशैनेयजानीहिगत्वाराजनिवेशनं अपिसज्जोमहातेजाभीमकर्मायुधिष्ठिरः २ ततःकृष्णस्य
वचनात्सात्यकिस्त्वरितोययौ उपगम्यचराजानंयुधिष्ठिरमभाषत ३ युक्तोरथवरोराजन्वा
सुदेवस्यधीमतः समीपगोयस्यप्रयास्यतिजनार्दनः ४ भवत्प्रतीक्षःकृष्णोसौधर्मराजमहा
द्युते यदत्रानन्तरंकृत्यंतद्भवान्कर्तुमर्हति ५ एवमुक्तःप्रत्युवाचयमपुत्रोयुधिष्ठिरः ६ युधिष्ठि
रउ॰ युज्यतांमेरथवरःफाल्गुनाप्रतिमद्युते नसैनिकैश्चयातव्यंयास्यामोवयमेवहि ७ न
चपीडयितव्योमेभीष्मोधर्मभृतांवरः अग्रतःपुरःसराश्चापिनिवर्तन्तांधनंजय ८ अद्यप्रभृतिगां
गेयःपरंगुह्यंप्रवक्ष्यति ततोनेच्छामिकौन्तेयपृथक्जनसमागमं ९ वैशंपायनउ॰ सत
द्वाक्यमथाज्ञायकुन्तीपुत्रोधनंजयः युक्तंरथवरंतस्माआचचक्षेनरर्षभः १० ततोयुधि
ष्ठिरोराजायमौभीमार्जुनावपि भूतानीवसमस्तानियुयुःकृष्णनिवेशनं(?)महात्मनः शै
नेयसहितोधीमानरथमेवान्वपद्यत ११ रथस्थाःसंविदंकृत्वासंवादंपृष्ट्वाचशर्वरीं मे
घघोषैरथवरैःप्रययुस्तेनरर्षभाः १२ ॥ +कृष्णनिवेशनं ९ आगच्छत्वथ ३

श्री॰
शां॰ रा
टी॰
५५

२१ २२ २३ २४ २५ २६ २७ २८ त्रिपंचाशत्तमः ५३ धर्म १ २ ३ ४ ॥

बलाहकंमेघपुष्पंशैब्यंसुग्रीवमेवच दारुकश्चोदयामासवासुदेवस्यवाजिनः २१ तेहयावासु
देवस्यदारुकेणप्रचोदिता गांखुराग्रैस्तदाराजन्लिखंतःप्रययुस्तदा २२ तेग्रसंतइवाकाशंवे
गवंतोमहाबलाः तेत्रधर्मस्यक्षेत्रस्यकुरुक्षेत्रमवातरन् २३ ततोययुर्यत्रभीष्मःशरतल्पगा
तःप्रभुः आस्तेमहर्षिभिःसार्द्धंब्रह्मादेवगणैर्यथा २४ ततोवतीर्यगोविंदोरथात्सचयुधिष्ठिरः
भीमोगांडीवधन्वाचयमौसात्यकिरेवच २५ ऋषीनभ्यर्चयामासुःकरानुद्यम्यदक्षिणान् सतैःप
रिवृतोराजान्नक्षत्रैरिवचंद्रमाः २६ अभ्याजगामगांगेयंब्रह्माणमिववासवः शरतल्पेशयानं
तमादित्यंपतितंयथा २७ सददर्शमहाबाहुर्भयाच्चागतसाध्वसः २८ इतिश्रीमहाभारतेशांतौरा
जधर्मेभीष्माभिगमने ५३ जनमेजयउवाच धर्मात्मनिमहावीर्येसत्यसंधेजितात्मनि देवव्रतेम
हाभागेशरतल्पगतेच्युते शयानेवीरशयनेभीष्मेशांतनुनंदने गांगेयेपुरुषव्याघ्रेपांडवैःपर्यु
पासिते २ काःकथाःसमवर्त्तंततस्मिन्वीरसमागमे हतेषुसर्वसैन्येषुतन्मेशंसमहामुने ३
वैशंपायनउवाच शरतल्पगतेभीष्मेकौरवाणांधुरंधरे आजग्मुर्ऋषयःसिद्धानारदप्रमु
खान्नृप ४ ॥

५५

५ ६ ७ समाचक्षेब्रवीमि अनुयुज्यतांपृच्छ्यतां ८ ९ १० ११ ततःउवाचेतिच्छेदः १२ १३ अभ्याहारयत् अवाचयत् १४ १६

हतशिष्टाश्चराजानोयुधिष्ठिरपुरोगमाः धृतराष्ट्रश्चकृष्णश्चभीमार्जुनयमास्तथा ५ तेभिगम्य
महात्मानोभरतानांपितामहं अनुशोचंतगांगेयमादित्यंपतितंयथा ६ मुहूर्तमिवचध्यात्वाना
रदोदेवदर्शनः उवाचपांडवान्सर्वान्हतशिष्टांश्चपार्थिवान् ७ प्राप्तकालंसमाचक्षेभीष्मोयम
नुयुज्यतां अस्तमेतिहिगांगेयोभानुमानिवभारत ८ अयंप्राणानुत्सिसृक्षुस्तंसर्वेभ्यनुपृच्छत कृ
त्स्नान्हिविविधान्धर्मांश्चातुर्वर्ण्यस्यवेत्त्ययं ९ एषवृद्धःपरांल्लोकान्संप्राप्नोतितनुंत्यजन् तंशी
घ्रमनुयुंजीध्वंसंशयान्मनसिस्थितान् १० एवमुक्तानारदेनभीष्ममीयुर्नराधिपाः प्रष्टुंचाश
क्नुवंतस्तेवीक्षांचक्रुःपरस्परं ११ ततोवाचहृषीकेशंपांडुपुत्रोयुधिष्ठिरः नान्यस्त्वद्देवकीपुत्रा
च्छक्तःप्रष्टुंपितामहं १२ प्रव्याहरयदुश्रेष्ठत्वमग्रेमधुसूदन त्वंहिनस्तातसर्वेषांसर्वधर्मविदु
त्तमः १३ एवमुक्तःपांडवेनभगवान्केशवस्तदा अभिगम्यदुराधर्षंप्रव्याहारयदच्युतः १४
वासुदेवउ॰ कच्चित्सुखेनरजनीव्युष्टातेराजसत्तम विस्पष्टलक्षणाबुद्धिःकच्चिच्चोपस्थितात
व १५ कच्चिज्ज्ञानानिसर्वाणिप्रतिभातिचतेनघ नग्लायतेचहृदयंनचतेव्याकुलंमनः १६ भी
ष्मउवाच दाहोमोहःश्रमश्चैवक्लमोग्लानिस्तथारुजा तवप्रसादाद्गोविंदसद्यःप्रतिगतानिमे १७

श्री॰
शां॰ रा॰
टी॰
९॰

१८ वेदोक्ताः अग्निहोत्रादयः वेदान्ताधिगताः शमदमसंन्यासादयः १९ २० २१ मेमम मनः कर्म बुद्धिराविशत् २२ २६ मम

यच्चभूतंभविष्यच्चभवच्चपरमद्युते तत्सर्वमनुपश्यामिपाणौफलमिवार्पितं १८ वेदोक्ताश्चैवये
धर्मावेदान्ताधिगताश्चये तान्सर्वान्संप्रपश्यामिवरदानात्तवाच्युत १९ शिष्टैश्चधर्मोयःप्रोक्तःस
चमेहृदिवर्त्तते देशजातिकुलानांचधर्मज्ञोस्मिजनार्दन २० चतुर्ष्वाश्रमधर्मेषुयोर्थःसचहृदिस्थि
तः राजधर्मांश्चसकलानवगच्छामिकेशव २१ यद्यद्यत्रचवक्तव्यंतद्वक्ष्यामिजनार्दन तवप्रसादा
द्धिशुभामनोमेबुद्धिराविशत् २२ युवेवास्मिसमावृत्तस्त्वदनुध्यानबृंहितः वक्तुंश्रेयःसमर्थोस्मि
त्वत्प्रसादाज्जनार्दन २३ स्वयंकिमर्थंतुभवान्श्रेयोनप्राहपाण्डवं किंतेविवक्षितंचात्रतदाशुवद
माधव २४ वासुदेवउवाच यशसःश्रेयसश्चैवमूलंमांविद्धिकौरव मत्तःसर्वेभिनिर्वृत्ताभावास
दसदात्मकाः २५ शीतांशुश्चंद्रइत्युक्तेलोकेकोविस्मयिष्यति तथैवयशसापूर्णेमयिकोवि
स्मयिष्यति २६ आधेयंतुमयाभूयोयशस्तवमहाद्युते ततोमेविपुलाबुद्धिस्त्वयिभीष्मसम
र्पिता २७ यावद्धिपृथिवीपालपृथ्वीयंस्थास्यतेध्रुवा तावत्तवाक्षयाकीर्त्तिर्लोकाननुचरि
ष्यति २८ यच्चत्वंवक्ष्यसेभीष्मपाण्डवायानुपृच्छते वेदप्रवादाइवतेस्थास्यन्तिवसुधातले २९ ॥

३० ३१ अनुयुयुक्षंतः प्रष्टुमिच्छंतः ३२ ३३ ३४ ३५ ३६ ३७ ३८ चतुःपंचाशः ५४ अथा १ ॥

यश्चैतेनप्रमाणेनयोक्ष्यत्यात्मानमात्मना सफलंसर्वगुण्यानांप्रेत्यचानुभविष्यति ३० एतस्मा
त्कारणाद्भीष्ममतिर्दिव्यामयाहिते दत्तायशोविप्रथयेत्कथंभूयस्तवेतिह ३१ यावद्धिप्रथ्यतेलो
केपुरुषस्ययशोभुवि तावत्तस्यातयाकीर्तिर्भवतीतिविनिश्चितं ३२ राजानोहतशिष्टास्त्वांरा
जन्नभितआसते धर्माननुयुयुक्षंतस्तेभ्यःप्रब्रूहिभारत ३३ भवान्हिवयसाहृदः श्रुताचारसम
न्वितः कुशलोराजधर्माणांसर्वेषामपराजये ३४ जन्मप्रभृतितेकश्चिद्वृजिनंनददर्शह ज्ञा
तारंसर्वधर्माणांत्वांविदुःसर्वपार्थिवाः ३५ तेभ्यःपितेवपुत्रेभ्योराजन्ब्रूहिपरंनयं ऋषयश्चै
वदेवाश्चत्वयानित्यमुपासिताः ३६ तस्माद्वक्तव्यमेवेदंत्वयावश्यमशेषतः धर्मंशुश्रूषमाणेभ्यः
पृष्टेनचसतांगुनः ३७ वक्तव्यंविदुषावेतिधर्ममाहुर्मनीषिणः अप्रतिब्रुवतःकष्टोदोषोहिभवि
ताप्रभो ३८ तस्मात्पुत्रैश्चपौत्रैश्चधर्मान्पृष्टःसनातनात् विद्वान्जिज्ञासमानैस्त्वंप्रब्रूहिभ
रतर्षभ ३९ इतिश्रीमहाभारतेशांतौराजधर्मेषु ५४ वैशंपायनउ० अथाब्रवीन्महातेजावा
क्यंकौरवनंदनः हंतधर्मान्प्रवक्ष्यामिदृढेवाङ्मनसीमम १ ॥

श्री०
शां० रा०
टी०
११

भूतात्माप्राणिनामंतरात्मास्मितेनममाभिप्रायंवेत्सीतिभावः २ प्रसंगाद्धर्मश्रवणाधिकारिणंनिरूपयतियुधिष्ठिरस्त्वितिव्याजेनय

तवप्रसादाद्गोविंदभूतात्माह्यसिशाश्वतः युधिष्ठिरस्तुधर्मात्मामांधर्मान्नानुपृच्छति एवंप्रीतोभविष्या
मिसर्वानवद्यामिचाविलान् २ यस्मिन्राजर्षभेजातेधर्मात्मनिमहात्मनि प्रहृष्टमभवल्लोकःसर्वेस
मांपृच्छतुपांडवः ३ सर्वेषांदीप्तयशसांकुरूणांधर्मचारिणां यस्यनास्तिसमःकश्चित्समांपृच्छतुपां
डवः ४ धृतिर्दमोब्रह्मचर्यंक्षमाधर्मश्चनित्यदा यस्मिन्नोजश्चतेजश्चसमांपृच्छतुपांडवः संबंधीन
तिथीन्भृत्यान्संश्रितांश्चैवयोभृशं संमानयतिसत्कृत्यसमांपृच्छतुपांडवः ६ सत्यंदानंतपःशौर्यं
शांतिर्दाक्ष्यमसंभ्रमः यस्मिन्नेतानिसर्वाणिसमांपृच्छतुपांडवः ७ योनकामान्नसंरंभान्नभयान्नार्थ
कारणात् कुर्यादधर्मंधर्मात्मासमांपृच्छतुपांडवः ८ सत्यनित्यःक्षमानित्योज्ञाननित्योऽतिथिप्रि
यः योददातिसतांनित्यंसमांपृच्छतुपांडवः ९ इज्याध्ययननित्यश्चधर्मेचनिरतःसदा शांतः
श्रुतरहस्यश्चसमांपृच्छतुपांडवः १० वासुदेवउ० लज्जयापरयोपेतोधर्मराजोयुधिष्ठिरः अभिशाप
भयाद्भीतोभवंतंनोपसर्पति ११ लोकस्यकदनंकृत्वालोकनाथोविशांपते अभिशापभयाद्भीतोभ

स्मिन्नित्यादिना ३ ४ ५ संबंधीन्संबंधिनः ६ ७ ८ ९ १० अभिशापोलोकगर्हणा ११ १२ ॥ वंतंनोपसर्पति १२ ॥

११

१२ गोत्रवधजां ग्लानिं धर्मराजस्यापनेष्यन् भीष्म उवाच ब्राह्मणानामिति ४ तं लोभिनं ७ २२ पंचपंचाशत्तमः ५५ प्र

पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबंधिबांधवान् अर्घ्यार्हानिषुभिर्भित्वा भवंतं नोपसर्पति १३ भी
ष्म उ॰ ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः क्षत्रियाणां तथा कृष्ण समरे देहपातनं १४ पितॄ
न्पितामहान्भ्रातॄन्गुरून्संबंधिबांधवान् मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः १५ स
मयत्यागिनो लुब्धान्गुरूनपि च केशव निहंति समरे पापान्क्षत्रियः स हि धर्मवित् १६ यो लो
भान्न समीक्षेत धर्मसेतुं सनातनं निहंति यस्तं समरे क्षत्रियो वै स धर्मवित् १७ लोहितोदां केशतृ
णां गजशैलां ध्वजद्रुमां महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् १८ आहूतेन रणे नित्यं यो
द्धव्यं क्षत्रबंधुना धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् १९ वैशंपायन उ॰ एवमुक्तस्तु भीष्मेण
धर्मपुत्रो युधिष्ठिरः विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः २० अथास्य पादौ जग्राह भीष्मश्चापि न
नंद तं मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा २१ तमुवाचाथ गांगेयो वृषभः सर्वधन्विनां
पृच्छ तात विश्रब्धं मा भैस्त्वं कुरुसत्तम २२ इति श्रीमहाभारते शांतौ राजधर्मेषु ५५ वैशंपायन
उ॰ प्रणिपत्य हृषीकेशमभिवाद्य पितामहं अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः १ ॥

णिपत्येति पृष्टः कृष्णव्यासादीन् पर्यपृच्छत् धर्मानिति शेषः १ ॥

धर्मः प्रजापालनात्मकः परमः सर्वधर्मश्रेष्ठः एतं धर्मभारं दुर्वहं मन्ये १ परायणं आश्रयः २ त्रिवर्गः धर्मार्थकामात्मको राजध
र्मेषु दंडनीतौ समासक्तः समाश्रितः ३ प्रग्रहणं नियंत्रणं ४ संस्था मर्यादा व्यवस्था ५ अलोक्यां अप्रकाशात्मिकां अशुभां ग

युधिष्ठिर उवाच राजा वै परमो धर्म इति धर्मविदो विदुः महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव
१ राजधर्मान्विशेषेण कथयस्व पितामह सर्वस्य जीवलोकस्य राजधर्मः परायणं २ त्रिवर्गो
ह्यत्र समासक्तो राजधर्मेषु कौरव मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ३ यथा हि रश्म
योऽश्वस्य द्विरदस्यांकुशो यथा नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतं ४ तत्र चेत्संप्रमुह्येत धर्मे
राजर्षिसेविते लोकस्य संस्था न भवेत्सर्वं च व्याकुलीभवेत् ५ उदयन्हि यथा सूर्यो नाशय
त्यशुभं तमः राजधर्मास्तथालोक्यां आक्षिपन्त्यशुभां गतिं ६ तदग्रे राजधर्मान्हि मदर्थे त्वं पिता
मह प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्मभृतां वरः ७ आगमश्च परस्त्वत्तः सर्वेषां नः परंतप भवन्तं
हि परं बुद्धौ वासुदेवोऽभिमन्यते ८ भीष्म उवाच नमो धर्माय महते नमः कृष्णाय वेधसे
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ९ ॥

तिं नरकं निःक्षिपंति दूरीकुर्वंति तथा च स्मृतिः राजभिः कृतदंडास्तु शुद्ध्यंति मलिना जनाः कृतार्थाश्च ततो यांति स्वर्गं सुकृतिनो यथे
ति ६ अग्रे उत्तरेभ्यो धर्मेभ्यः पूर्वं ७ परः आगमः परं रहस्यं नः अस्माकं त्वत्त एव विदितमस्तु ८ शाश्वतान् वेदपरंपरागतान् ९

११ रंजनकाम्ययेति यःकश्चिदक्षत्रियोपिप्रजापालनाधिकृतःतस्यराज्ञोऽयंधर्मःयत्देवद्विजादिषुयथाविधिप्रवृत्त
द्वृद्ध्यावर्त्तितव्यमिति १२ यद्धर्मलोपाद्राजक्षरणंभवतितद्देवतार्चनेननश्यतीत्याहदेवतानीति लोकेचतत्तत्पदपूज्योभ
वतीतिसंयोगांतरं १३ उत्थानेनपुरुषकारेणप्रयतेथाःजयार्थंयतस्व दैवंप्राग्भवीयंकर्मदेवताराधनादिकंवाकेवलं

शृणुकार्त्स्न्येनमत्तस्त्वंराजधर्मान्युधिष्ठिर निरुच्यमानान्नियतोयच्चान्यदपिवांछसि ११ आ
दावेवकुरुश्रेष्ठराज्ञारंजनकाम्यया देवतानांद्विजानांचवर्तितव्यंयथाविधि १२ दैवतान्यर्चयि
त्वाहिब्राह्मणांश्चकुरूद्वह आनृण्यंयातिधर्मस्यलोकेनचसमर्च्यते १३ उत्थानेनसदापुत्रप्रयते
थायुधिष्ठिर नह्युत्थानमृतेदैवंराज्ञामर्थंप्रसाधयेत् १४ साधारणंद्वयंह्येतद्दैवमुत्थानमेव
च पौरुषंहिपरंमन्येदैवंनिश्चित्यमुच्यते १४ विपन्नेचसमारंभेसंतापंमास्मवैकृथाः घटस्वै
वंसदात्मानंराज्ञामेषपरोनयः १५ नहिसत्यादृतेकिंचिद्राज्ञांवैसिद्धिकारकं सत्येहिराजानिरतः
प्रेत्यचेहचनंदति १६ ऋषीणामपिराजेंद्रसत्यमेवपरंधनं तथाराज्ञःपरंसत्यान्नान्यद्विश्वास

उत्थानंविनानराज्ञोऽभीष्टमर्थंसाधयेत् १३ साधारणंरथचक्रवत्समानंतत्रापिपौरुषंपरंश्रेष्ठंदृष्टद्वारत्वात् दैवंतुफलाफलदाय
निश्चित्यमुच्यते अकरणादोषात्फलासिद्धौ फलसिद्धौतुदुःखान्मुच्यते १४ विपन्नेइति घटस्व कर्षकवत्सकृद्यत्नेवैकल्येपियत्नंसेवे
त्यर्थः १५ नहीतिसत्यात्सामंतादयोपिविश्रंभंवंत्यन्यथाविश्वासाभावात्स्वीया अपिद्विजंतेतेषांचप्राणार्पणेनापिजिगीषंत

श्री·
शां·रा·
टी·
१०३

गुणाः शौर्यौदार्यगांभीर्यादयस्तद्वान् शीलं सदाचारस्तद्वान् दांतः अचपलः मृदुर्दयावान् धर्म्यो धर्मादनपेतः जितें
द्रियः जितचित्तः सुदर्शः प्रसन्नवक्त्रः स्थूललक्षः बहुप्रदः १८ आर्जवं अकुवत्वं नयो नीतिः स्वस्य गोपनं परस्यान्वेष
णं स्पस्वेन क्रियमाणस्य परेभ्यो गोपनं मंत्रगोपनं चेत्यादिः नयुक्तेन विचारेण ऊहापोहेन साधकबाधकोपन्यासेन क्रियमा

गुणवान् शीलवान् दांतो मृदुर्धर्म्यो जितेंद्रियः सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः १८
आर्जवं सर्वकार्येषु श्रयेथाः कुरुनंदन पुनर्नयविचारेण त्रयीसंवरणेन च १९ मृदुर्हि राजा
सततं लंघ्यो भवति सर्वशः तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर २० अदंड्याश्चैव ते पुत्र
विप्राश्च ददतां वर भूतमेतत्परं लोके ब्राह्मणो नाम पांडव २१ मनुना चैव राजेंद्र गीतौ श्लो
कौ महात्मना धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि २२ अद्भ्योग्निर्ब्रह्मतः क्षत्रमश्मनो लोह
मुत्थितं तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति २३ अयो हंति यदाश्मानमग्निना वारि ह
न्यते ब्रह्म च क्षत्रियो द्वेष्टि तदा शीदंति ते त्रयः २४ एवं ज्ञात्वा महाराज नमस्या एव ते द्विजाः
भौमं ब्रह्म द्विजश्रेष्ठा धारयंति समर्चिताः २५ एवं चैव नरव्याघ्र लोकत्रयविघातकाः निग्रा

णेन त्रयीसंवरणेन उक्तविधनीतिरूपे आर्जवे यथार्थभाषित्वं च अश्रयेथाः ह्या एव सततं बाहुभ्यां ये स्युरीदृशाः २६ ॥
१९ उभयं मृदुत्वं तीक्ष्णत्वं च समुच्चितं श्रेयः २० तत्रापि तीक्ष्णस्यापवादमाह अदंड्या इति २१ २४ भौमं ब्रह्म वेदान् यज्ञांश्च २५

१०३ [illegible] २६ ॥

२७ स्वधर्मेणशास्त्रोद्यमनेन निगृह्णीयादेवनतुहन्यात् २८ विनश्यमानंआततायिदोषात् तेनआततायिनिग्रहेण अ
निग्रहेतुधर्महास्यादेवजीवतोऽस्यनिग्रहोदुःशाकश्चेत्तत्राहमन्युस्तन्मन्युमृच्छति यथासूर्यांशुतप्तःस्फटिकस्तूलपिंडमुद्दीप्यन्
दृष्ट्यंशस्वयंनश्यतिएवमाततायिक्रोधोऽन्यमुद्दीप्यन्हताऽततायिनमेवाश्रयदाहेनदहतिनात्रहन्तुर्दोषइत्यर्थः २९ एवंचेति

श्लोकौचोशनसागीतौपुरातनमहर्षिणा । तौनिबोधमहाराजत्वमेकाग्रमनानघ २७
उद्यम्यशस्त्रमायांतमपिवेदांतगंरणे । निगृह्णीयात्स्वधर्मेणधर्मापेक्षीनराधिप २८ विन
श्यमानंधर्मंहियोभिरक्षेत्सधर्मवित् नतेनधर्महासःस्यान्मन्युस्तन्मन्युमृच्छति २९ एवंचैवनरश्रेष्ठ
वध्यएवद्विजायतः साप्यराधानपिद्विजान्विषयांतेसमुत्सृजेत् ३० अभिशस्तमपिह्ये
षांकृपायीतविशांपते ब्रह्मघ्नेगुरुतल्पेचभ्रूणहत्येतथैवच ३१ राजन्हिएवविप्रस्यविषयां
तेविसर्जनं विधीयतेनशारीरंभयमेषांकदाचन ३२ दयिताश्चनरास्तेस्युर्भक्तिमतोद्वि
जेषुये नकोशःपरमोऽन्योस्तिराज्ञांपुरुषसंचयात् ३३ दुर्गेषुमहाराजषट्स्वयेशास्त्र
निश्चिताः सर्वदुर्गेषुमन्येतनरदुर्गंसुदुस्तरं ३४ तस्मान्नित्यंदयाकार्याचातुर्वर्ण्येविपश्चि

यद्यप्येवंतथापिद्विजातयोब्राह्मणावध्याएव ३० अभिशस्तंसतः ता धर्मात्मासत्यवाक्चैवराजारंजयतिप्रजाः
सत्तावादेदोषयुक्तंतथाप्यापितं ३१ शारीरंकशाघातादिदंडंजीवनमार्थं ३२ गृहधर्मसंचयात्ब्राह्मणाभक्तादितिपूर्वार्द्धार्थः ३३ घट्ट

श्री॰
प्रां॰ रा॰
टी॰
९४

पुनर्दयापवादमाह नचेति समंततः सर्वजातीयेषु अयमोधर्मविरोधी ३६ ३७ गजस्यक्षममाणस्य ३८ ३९ प्रत्यक्षेणोपका
रापकारादिनाअनुमानेननेत्रवक्त्रविकारादिना यथोक्तंनेत्रवक्त्रविकारेणज्ञायतेंतर्गतंमनइति औपम्यंउपमानंअन्यत्रकार्यदर्श
नेन आगमैःशब्दादिनासामुद्रिकलक्षणेन तेपुरुषाःपरीक्ष्याः ४० व्यसनानिअष्टादश यथाहमनुः मृगयाक्षादिवास्वप्नःप
रिवादःस्त्रियोमदः तौर्यत्रिकंवृथाट्याचकामजोदशकोगणः तौर्यत्रिकंवाद्यगीतनृत्यानि पैशून्यंसाहसंद्रोहईर्ष्यासूयार्थ

नचक्षांतेननतेनित्यंभाव्यंपुत्रसमंततः अयमोहिनरोराजात्समावानिवर्द्धंजरः ३७ क्ष
ममाणंनृपंनित्यंनीचःपरिभवेज्जनः हस्तियंतागजस्येवशिरएवारुहन्निति ३८ त
स्मान्नैवमृदुर्नित्यंतीक्ष्णोनैवभवेन्नृपः वासंतार्कइवश्रीमान्नशीतोनचघर्मदः ३९
प्रत्यक्षेणानुमानेनतथौपम्यागमैरपि परीक्ष्यास्तेमहाराजस्वेपरेचैवनित्यशः ४० व्य
सनानिचसर्वाणित्यजेद्याभूविवर्द्धिनि नचैवनप्रयुंजीतसंगंतानपरिवर्जयेत् ४१ ॥

दूषणं वाग्दंडजंचपारुष्यंक्रोधजोपिगुणोष्टकइति तत्रचसप्तमकष्टतमानि यथाह पानमक्षाःस्त्रियश्चैवमृगयाचयथाक्रमं
एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे दंडस्यपातनंचैववाक्पारुष्यार्थदूषणं क्रोधजेपिगणेविद्यात्कष्टमेतत्त्रिकंसदेति नप्रयुं
जीतेतिनअपितुसर्वदा ४१ ॥

व्यसनीव्यसनं मृगयाद्याः स्त्रियः पानं वा तद्वान् अतिद्वेषी प्रजाद्रोहपरः ४२ ४३ प्रियमिष्टं ४४ ४५ तेनवयास्पष्टः ख्यातो
दंडः रथहस्तिपुरुषादिसमूहो यस्य तस्य स्पष्टदंडस्य ४६ ४७ संघर्षात् अतिसंश्लेषात् ४८ विकल्पते कार्यसंशयं दर्शयंति गु

लोकस्य व्यसनी नित्यं परिभूतो भवत्युत उद्वेजयति लोकं च योऽतिद्वेषी महीपतिः भवितव्यं स
दा राज्ञा गर्भिणीसहधर्मिणा कारणं च महाराज श्रूयतां येनेदमिष्यते ४३ यथा हि गर्भिणी हि
त्वा स्वं प्रियं मनसोऽनुगं गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयं ४४ वर्तितव्यं कुरुश्रेष्ठ सदा धर्मा
नुवर्तिना स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवेत् ४५ न संत्याज्यं च ते धैर्यं कदाचिदपि पाण्डव
धीरस्य स्पष्टदण्डस्य न भयं विद्यते क्वचित् ४६ परिहासश्च भृत्यैस्ते नात्यर्थं वदतां वर कर्तव्यो राज
शार्दूल दोषमत्र हि मे शृणु ४७ अवमन्यन्त भर्तारं संहर्षादुपजीविनः स्वे स्थाने न च तिष्ठंति
च तत्त्वतः ४८ प्रेक्ष्यमाणो विकल्पंते गुह्यं चाप्यनुयुंजते अयाच्यं चैव याचंते भोज्यान्याहा
रयंति च ४९ क्रुध्यंति परिदीप्यंति भूमिपायाधितिष्ठते उत्कोचैर्वंचनाभिश्च कार्याण्यनु
विहंति च ५० जर्जरं चास्य विषयं कुर्वंति प्रतिरूपकैः स्त्रीरक्षिभिश्च सज्जंते तुल्यवेशा भ
वंति च ५१ वातं निष्ठीवनं चैव कुर्वंते चास्य सन्निधौ निर्लज्जा राजशार्दूल व्याहरंति च तद्वचः

ह्यं गोप्यमपि छिद्रं अनुयुंजते प्रकटयंति भोज्यानि राजाहार्याणि आहारयंति भक्षयंति ४९ उत्कोचैर्लंचाभिः वंचनाअलीकगुणदोषादिदर्शनं
अनुविहंति विनिघ्नंति ५० प्रतिरूपकैः कृत्रिमैः शासनपत्रैः विषयं देशं जर्जरंति सारं स्त्रीरक्षिभिः सज्जंते प्रीतिं कुर्वंति अंतःपुरप्रवेश
मिच्छंते ५१ वातं जृंभादिना निष्ठीवनं थूत्कारं तद्वचः राजवाक्यं गुह्यमपि लोके व्याहरंति ५२ ॥

हर्षुलेपरिहासशीले ५३ ५४ विस्रंसयंतिभेदयंति ५६ हेलनानिकुर्वंतितिशेषः उपशृण्वतःशृण्वंतमनादृत्य स्वस्थाःनिर्भयाः
५७ राजदेयंराजभागं ५८ क्रीडितुंराज्ञासहहस्त्यश्वादिक्रीडांकर्तुं ससूत्रेणाबद्धेनपक्षिणाश्येनेन राज्ञोनिरोधकाइत्यर्थः प्रणे

हृयंवादंतिनैवापिरथंवान्रपसंमतं अपिरोहंत्यनाहत्यहर्षुलेपार्थिवेसदो ५३ इदंतेडक्क
रंराजन्निदंतेडष्टचेष्टिते अन्यैवमहृदोवाचंवदंतिपरिषद्गताः ५४ क्रुद्धेचास्मिन्हसंत्येवनच
हृष्यंतिपूजिताः संहर्षशीलाश्चतदाभवंत्यन्योन्यकारणात् ५५ विस्रंसयंतिमंत्रंचविवृण्व
तिचदुष्कृतं लीलयाचैवकुर्वंतिसावज्ञास्तस्यशासनं ५६ अलंकारंचभोज्यंचतथास्नाना
नानुलेपने क्रियमाणेनरव्याघ्रस्वस्थास्तस्योपशृण्वतः ५७ निंदंतेस्वानधीकारान्संत्यजंते
चभारत नहत्यापरितुष्यंतिराजदेयंहरंतिच ५८ क्रीडितुंतेनचेच्छंतिससूत्रेणेवपक्षिणा
असमत्प्रणयोराजेतिलोकांश्चैववदंत्युत ५९ एतेचैवापरेचैवदोषाःप्रादुर्भवंत्युत नृप
तौमार्दवोपेतेहर्षुलेचयुधिष्ठिर ६० इतिश्रीमहाभारतेशांतौराजधर्मेषु ५६ ॥

यःआश्रयः ५९ अपरेदासापहारादयः ६० इतिषट्पंचाशत्तमोध्यायः ५६ ॥

अस्यैवाध्यायस्य सूत्रभूतस्य उत्तरोग्रंथो हन्तिनृपः तत्र उत्थानेन तयतेथा ह्युक्तं तद्धि हणोति निन्त्येति १ यतः श्लोकं आह ततः तस्मात्
श्लोकं निबोध २ अप्रवासिनं वेदाध्ययनार्थं ब्राह्मणाय तिंवा ३ विरोधय यपर्वतादीतेषां विशेषेणरोधं कुरु ४ सप्तस्वाम्यमात्या

भीष्मउवाच नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर प्रशाम्यते न राजा हि नारीवोद्यमवर्जि
तः १ भगवानुशना चाह श्लोकमत्र विशांपते तदिहैकमना राजन् गदतः शृणु मे २ द्वा
विमौ ग्रसते भूमिः सर्पो विलशयानिव राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनं ३ तदेतन्न
रशार्दूल हृदि त्वं कर्तुमर्हसि संधेयानभिसंधत्स्व विरोध्यांश्च विरोधय ४ सप्तांगस्य च राज्य
स्य विपरीतं य आचरेत् गुरुर्वा यदि वा मित्रं प्रतिहंतव्य एव सः ५ मरुत्तेन हि राज्ञा वै गीतः श्लो
कः पुरातनः राजाधिकारे राजेन्द्र बृहस्पतिमतं पुरा ६ गुरोरप्यवलिप्तस्य कार्याकार्यम
जानतः उत्पथप्रतिपन्नस्य दंडो भवति शाश्वतः ७ बाहोः पुत्रेण राज्ञा च सगरेण च धीमता
असमंजाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ८ असमंजाः सरय्वां स पौराणां बालकान्नृप
न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ९ ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः मि
थ्या विप्रानुपचरन् संत्यक्तो दयितः सुतः १० ॥

सप्तांगस्य विपरीतं यस्य
सुहृत्कोशराष्ट्रदुर्गबलानि अंगानि यस्य तस्य
कस्यचिदंगस्य प्रतिकूलं ५ ६ शाश्वतः अप्रतिसमाधेयः पर्वतारोहणादिरूपो दण्डः अन्यस्य तु वध एव ७ ८ ९ ॥

११ हिंस्यातकरार्थं तेनेषुधान्यानि हस्त्याह्वाद्यादिना न नाशयेत् देयं भृत्यानां वेतनं विक्रान्तः पराक्रमी दान्तः क्षमावा
न् पथः शुभमार्गात् १२ आत्मवान् जितचित्तः शास्त्रार्थकृतनिश्चयः निःसंदेहः सततं नित्यं पूर्वाह्णे धर्मं मध्याह्ने ऽर्थं
अपराह्णे कामं अपररात्रे योगं चेति नित्यं सर्वानपि सेवेत १३ वृजिनं संकटं अत्राणात् मंत्रस्य गोपनादन्यन्नास्ति १४ य
र्माणां संकरो व्यत्ययः तस्मात्प्रजानां रक्षा धर्मसंकररक्षा १५ न विश्वसेत् चातिविश्वसेदपि आप्तेषु तेष्वपि अत्यर्थं न वि

लोकरंजनमेवात्र राज्ञां धर्मः सनातनः सत्यस्य रक्षणं चैव व्यवहारस्य चार्जनं ११ नहिं-
स्यात्परवित्तानि देयं काले च दापयेत् विक्रान्तः सत्यवाक् दान्तो नृपो न चलते पथः १२ आ-
त्मवांश्च जितक्रोधः शास्त्रार्थगतनिश्चयः धर्मे चार्थे च कामे च मोक्षे च सततं रतः १३ त्रय्यां सं-
वृतमंत्रश्च राजा भवितुमर्हति वृजिनं च नरेन्द्राणां नान्यच्चारक्षणात्परं १४ चातुर्वर्ण्यस्य धर्मा-
श्च रक्षितव्या महीक्षिता धर्मसंकररक्षा च राज्ञां धर्मः सनातनः १५ न विश्वसेच्च नृपतिर्न चात्य-
र्थं च विश्वसेत् षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्यावलोकयन् १६ ॥

श्वसे षण्णां गुणानां भावः षाड्गुण्यं ते च बलवति स्थायिनि यायिनः संधिः समबले विग्रहो युद्धादिः दुर्बले यानेन तदीयदुर्गाद्या-
क्रमणं एवं स्थायिनः बलवति यायिनः बलवति यायिनि स्थायिनः आसनं दुर्गादावेव स्वरक्षणं मध्यमे द्वैधीभावः अर्द्धेन दंडेन दुर्गाश्रा-
यणं अर्द्धेन परेषां यान्यादिनिरोधनं दुर्बलस्य समाश्रयं मित्रान्तरमाश्रित्य तेन सह युद्धं कर्त्तव्यं एतेषु कर्त्तव्येषु गुणान् जयावहा-
न् दोषान् पराजयावहांश्चार्थीन् कोशदंडादिपोषकत्वादीन् स्वबुद्ध्या स्वयमेव निश्चिनुयात् १६ ॥

द्विषः शत्रोः सप्तसुराज्यांगेषु स्वप्रवेशद्वारशैथिल्यं तत् द्विड्छिद्रं एवं स्वस्य सप्तसुराज्यांगेषु परप्रवेशद्वारशैथिल्यं तत् प-
रच्छिद्रं द्विड्छिद्रदर्शी स्यात् एतच्च स्वच्छिद्रगोपनस्याप्युपलक्षणं त्रिवर्गो धर्मादिर्विदितार्थः ज्ञाततत्वः युक्ताचारः प्रच्छ-
न्नस्पशः उपधिः परकीयानाममात्यादीनां भक्तो च दानादिना भेदनं चैयेन स युक्तचारोपधिः तत्र चारनियोजनस्थानान्युक्तानि
नीतिशास्त्रे मंत्री पुरोहितश्चैव युवराजश्च भूपतिः पंचमो द्वारपालश्च षष्ठोऽन्तर्वंशिकस्तथा कारागाराधिकारी च द्रव्यसंचयकृ-
त्तथा कृत्याकृत्येषु चार्थानां नवमो विनियोजकः प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा धर्माध्यक्षः सभाध्यक्षो दंडपा-

द्विड्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते त्रिवर्गविदितार्थश्च युक्तचारोपधिश्च यः ७ कोशस्यो-
पार्जनरतिर्यमवैश्रवणोपमः वेत्ता च गुणदोषस्य स्यान्नहृद्धितयात्मनः ८ अभक्तानां भवे-
द्भर्त्ता भक्तानामन्ववेक्षकः नृपतिः सुमुखश्च स्यात् स्मितपूर्वाभिभाषिता ९ उपासिता च वृद्धा-
नां जितत्तंद्रिरलोलुपः सतां वृत्ते स्थितमतिः संतोष्याचारदर्शनः १० ॥

लश्चैव पंचमः षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः अटवीपालकान्तानि तीर्थान्यष्टादशैव तु चारान्विचारयेत्तीर्थेष्वात्म-
नश्च परस्य च पाषंडादीनविज्ञातानन्योन्यमितरेष्वपि मंत्रिणं युवराजं च हित्वा स्वेषु पुरोहितमिति ७ दशवर्गः अमात्यराष्ट्रदु-
र्गाणि कोशो दंडश्च पंचम इति प्रकृतिपंचकं स्वपक्षे परपक्षे चेति दशको वर्गः स च उभयोः साम्ये स्थाने स्थितिस्तत्कर्त्ता स्वस्याधिक-
श्च वृद्धिकर्त्ता परस्याधिकश्चेत् क्षयकर्त्ता ८ ९ १० ॥

२१ २२ शूरान्सहायान्कुर्यादिति तृतीयेनान्वयः असंहार्यान्परैरप्रतार्यान् शिष्टाभिसंबंधान्शिष्टपरिवारान् अनवमानिनः
अवमानंपरस्याकुर्वतः २३ अचलान्स्थिरान्अचलानिवपर्वतानिव २४ छत्रमात्रेणसहितायाआज्ञा इदमित्थंकुरुइदंनेति

नचाददीतवित्तानिसतांहस्तात्कदाचन असद्भ्यश्चसमादद्यात्सद्भ्यस्तुप्रतिपादयेत् २१ स्वयंप्र
हर्तादाताचवश्यात्मारम्यसाधनः कालेदाताचभोक्ताचशुद्धाचारस्तथैवच २२ शूरान्भक्तान
संहार्यान्कुलेजातानरोगिणः शिष्टान्शिष्टाभिसंबंधान्मानिनोनावमानिनः २३ विद्याविदोलोक
विदःपरलोकान्ववेक्षकान् धर्मेचनिरतान्साधूनचलानचलानिव २४ सहायान्सततंकुर्याद्राजाभू
तिपरिष्कृतः तैश्चतुल्योभवेद्भोगैश्छत्रमात्राज्ञयाधिकः २५ प्रत्यक्षाचपरोक्षाचवृत्तिश्चास्य
भवेत्सदा एवंकुर्वन्नरेन्द्रोपिनखेदमिहविन्दति २६ सर्वाभिशंकीनृपतिर्यश्चसर्वहरोभवेत् स
क्षिप्रमनृजुर्लुब्धःस्वजनेनैवबध्यते २७ शुचिस्तुपृथिवीपालोलोकचित्तग्रहेरतः नपतत्य
रिभिर्ग्रस्तःपतितश्चावतिष्ठते २८ अक्रोधनोह्यव्यसनीमृदुदंडोजितेंद्रियः राजाभवतिभूतानां
विश्वास्योहिमवानिव २९ ॥

तयाऽधिकः अन्यत्सर्वंशूरैःसमानंभुंजीत २५ इयंचशूरेषुराज्ञोवृत्तिःप्रत्यक्षापरोक्षाचभवेत्सन्निहितेष्वसन्निहितेषुवातुल्यास्यादित्य
र्थः २६ सर्वाभिशंकीसर्वत्राकृतविश्वासः सर्वहारःसर्वस्वापहारीअनृजुःअनृतापराधारोपकत् यतोलुब्धः २७ ॥

३० ३४ असंघातरताः संघातेशरीरेप्रीतिमंतोनभवंतिकिंतनस्माज्येयमेंपवेत्यर्थः ३५ नेयाः विनेतुंयोग्याः सं
घर्षःपराभिभवस्तच्छीलिनोन ३६ कूटंदंभःकपटंअन्यतं मात्सर्यःपरोत्कर्षासहिष्णुत्व ३७ ज्ञानातिज्ञानयुक्ता
प्राज्ञस्त्यागगुणोपेतःपररंध्रेषुतत्परः सुदर्शःसर्ववर्णानांनयापनयवित्तथा ३० क्षिप्रकारी
जितक्रोधःसुप्रसादोमहामनाः अरोषप्रकृतिर्युक्तःक्रियावानविकत्थनः ३१ आरब्धान्येव
कार्याणिसुपर्यवसितानिच यस्यराज्ञःप्रदृश्यंतेसराजाराजसत्तमः ३२ पुत्राइवपितुर्गेहेविष
येयस्यमानवाः निर्भयाविचरिष्यंतिसराजाराजसत्तमः ३३ अगूढविभवायस्यपौराराष्ट्रनिवा
सिनः नयापनयवेत्तारःसराजाराजसत्तमः ३४ स्वकर्मनिरतायस्यजनाविषयवासिनः अ
संघातरतादांताःपाल्यमानायथाविधि ३५ वश्यानेयाविधेयाश्चनचसंघर्षशीलिनः वि
षयेदानरुचयोनरायस्यसपार्थिवः नयस्यकूटकपटंनमायानचमत्सरः विषयेभूमिपाला
स्यतस्यधर्मःसनातनः ३७ यःसत्करोतिज्ञानानिज्ञेयेपौरहितेरतः सतांवर्त्मानुगस्त्यागीसरा
जाराज्यमर्हति यस्यचाराश्चमंत्राश्चनित्यंचैवकृताकृताः नज्ञायंतेद्विषद्भिःसराजाराज्यमर्ह
ति ३९ श्लोकश्चापिपुरागीतोभार्गवेणमहात्मना आख्यातेरामचरितेनृपतिंप्रतिभारत ४० राजा
नंप्रथमंविंदेत्ततोभार्यांततोधनं राजन्यसतिलोकस्यकुतोभार्याकुतोधनं ४१ ॥
नपंडितान् ज्ञेयेशास्त्रार्थेपरस्यहितावहेरतः नतुहिंसामयेत्यागीदाता ३८ कृताअप्यकृताकृताः ३९ ४० प्रथमंश्रेष्ठं

४२ रक्षैवराज्ञःकर्मेत्याहमङ्कर्षन्राजान्याज्यइत्यादिप्राचेतसइति ४३ ४४ सप्तपंचाशत्तमोध्यायः ५७ एततइत्यत्राणां नवनी
तवत्सर्वधर्मसारं न्याय्यंन्यायादनपेतं १ २ ३ अत्ररक्षणसाधनंपृच्छतिं ४ चाराःगुप्तस्पशाःप्रणिधिःप्रकटस्पशाः दानेभा-

तस्माद्राज्येराज्यकामानांनान्योधर्मःसनातनः ऋतेरक्षांतुविस्पष्टांरक्षालोकस्यधारिणी ४२ प्राचे
तसेनमनुनाश्लोकौचेमावुदाहृतौ राजधर्मेषुराजेंद्रताविहैकमनाःशृणु ४३ षडेतान्पुरुषोजह्या
द्भिन्नांनावमिवार्णवे अप्रवक्तारमाचार्यमनधीयानमृत्विजं ४४ अरक्षितारंराजानंभार्यांचाप्रिया-
वादिनीं ग्रामकामंचगोपालंवनकामंचनापितं ४५ इतिश्रीमहाभारतेशांतौराजधर्मेषु ५७
भीष्मउ॰ एतत्तेराजधर्माणांनवनीतंयुधिष्ठिर बृहस्पतिर्हिभगवान्नान्यंधर्मंप्रशंसति १ विशा
लाक्षश्चभगवान्काव्यश्चैवमहातपाः सहस्राक्षोमहेंद्रश्चतथाप्राचेतसोमनुः २ भरद्वाजश्चभग
वांस्तथागौरशिरामुनिः राजशास्त्रप्रणेतारोब्रह्मण्याब्रह्मवादिनः ३ रक्षामेवप्रशंसंतिधर्मंध
र्मभृतांवर राज्ञोराजीवताम्राक्षसाधनंचात्रमेशृणु ४ चारश्चप्रणिधिश्चैवकालेदानममत्स
रात् युक्त्यादानंनचादानमयोगेनयुधिष्ठिर ५ सतांसंग्रहणंशौर्यंदाक्ष्यंसत्यंप्रजाहितं अ
नार्जवैरार्जवैश्चशत्रुपक्षस्यभेदनं ६ ॥

क्तवेतनयोःयुक्तेःआदानं अयोगेनअनुपायेनआदानंकरग्रहणंनच ५ ६ ॥

केतनानांगृहादीनां द्विविधस्यशारीरदंडोऽर्थदंडश्चेतिभेदात् ७ निचयानांसंग्राह्याणांधान्यादीनांनिचयःसंग्रहः ८ ९
अविश्वासोपामिकादीनामपि पौराणांसंघातस्यपरैर्वाणिज्यादिच्छलेनवशीकृतस्यभेदनं १० उपजापःपरैःस्वभृत्यानां

केतनानांचजीर्णानामवेक्षाचैवसीदतां द्विविधस्यचदंडस्यप्रयोगःकालचोदितः ७ साधूनामपा
रित्यागःकुलीनानांचधारणं निचयश्चनिचेयानांसेवाबुद्धिमतामपि ८ बलानांहर्षणंनित्यं
प्रजानामन्ववेक्षणं कार्येष्वखेदःकोशस्यतथैवचविवर्द्धनं ९ पुरगुप्तिरविश्वासःपौरसंघातभेद
नं अरिमध्यस्थमित्राणांयथावच्चान्ववेक्षणं १० उपजापश्चभृत्यानामात्मनःपुरदर्शनं अविश्वा
सःस्वयंचैवपरस्याश्वासनंतथा ११ नीतिधर्मानुसरणंनित्यमुत्थानमेवच रिपूणामनवज्ञानं
नित्यंचानार्यवर्जनं १२ उत्थानंहिनरेंद्राणांबृहस्पतिरभाषत राजधर्मस्यतन्मूलंश्लोकांश्चात्र
निबोधमे १३ उत्थानेनामृतंलब्धमुत्थानेनासुराहताः उत्थानेनमहेंद्रेणश्रेष्ठ्यंप्राप्तंदिवीह
च १४ उत्थानवीरान्वाग्वीरारमयंतउपासते उत्थानवीरःपुरुषोवाग्वीरानधितिष्ठति उत्था
नहीनोराजाहिबुद्धिमानपिनित्यशः धर्षणीयःशत्रूणांभुजंगइवनिर्विषः १६ नचशत्रुरवज्ञे
योदुर्बलोपिबलीयसा अल्पोपिहिदहत्यग्निर्विषमल्पंहिनस्तिच ७

भेदनं अविश्वासःभृत्यानामेव ११ उत्थानं
उद्योगः अनार्यहीनकर्मकदर्यत्वादित्दर्जन ११ १२ १४ वाग्वीरान्पंडितान् उत्थानमेवमहत्त्वाडित्यमित्यर्थः १५ १६ १७ ॥

श्री॰
शां॰ रा॰
टी॰
९९

एकाङ्गेन हस्त्यश्वरथपादातानामन्यतमेनापि संभूतः सम्पन्नः सर्वद्धिनः समृद्धिमतः १८ स्त्रीयेन अनार्जवेन यत्र रहस्यं वाक्यं यो वा। जयार्थं लोकसंग्रहः यच्चास्य कारणेन शत्रुजयादिहेतुना जिह्मं कपटं यच्च वृजिनं हीनं कार्यं तत्सर्वं समीकुर्यादित्याहद्वाभ्यां।

एकाङ्गेनापि चोद्भूतः शत्रुर्दुर्गमुपाश्रितः सर्वं तापयते देशमपि राज्ञः समृद्धिनः १८ राज्ञो रहस्यं तद्वाक्यं यथार्थं लोकसंग्रहः हृदि यच्चास्य जिह्मं स्यात्कारणेन च यद्भवेत् १९ यच्चास्य कार्यं वृजिनमार्जवेनेह निर्जयेत् दंभनार्थं च लोकस्य धर्मिष्ठामाचरेत्क्रियां २० राज्यं हि सुमहत्तंत्रं धार्यते नाकृतात्मभिः न शक्यं मृदुना वोढुमायासस्थानमुत्तमं २१ राज्यं सर्वामिषं नित्यमार्जवेनेह धार्यते तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर २२ यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः सोप्यस्य विपुलो धर्म एवं वृत्ता हि भूमिपाः २३ एष ते राजधर्माणां लेशः समनुवर्णितः भूयस्ते यत्र संदेहस्तद्ब्रूहि कुरुसत्तम २४ वैशंपायन उ॰ ततो व्यासश्च भगवान्देवस्थानोश्म एव च वासुदेवः कृपश्चैव सात्यकिः संजयस्तथा २५ साधु साध्विति संहृष्टाः पुष्यमाणैरिवाननैः अस्तुवंस्ते नरव्याघ्रं भीष्मं धर्मभृतां वरं २६ ततो दीनमना भीष्ममुवाच कुरुसत्तमः नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् २७ श्व इदानीं स्वसंदेहं प्रक्ष्यामि त्वां पितामह उपैति सविताप्यस्तं रसमापीय पार्थिवं २८

त इति १९ दंभनार्थं संवाननार्थं २० अकृतात्मभिः क्रूरैः २१ मिश्रेण क्रौर्यमार्दवाभ्यां २२ २४ २६ २७ २८ ॥

२९ ३० अष्टपंचाशत्तमोध्यायः ५८ ततःकल्यमित्यध्यायोदंडनीतिशास्त्रस्यराज्ञश्चउत्पत्तिंवक्तुंप्रवर्तते कल्यंप्रातः १४ मातु

ततोद्विजातीनभिवाद्यकेशवःकृपश्चतेचैवयुधिष्ठिरादयः प्रदक्षिणीकृत्यमहानदींततस्ततोर
थानारुरुहुर्मुदान्विताः २९ दृषद्वतींचाप्यवगाह्यसुव्रताःकृतोदकार्थाःकृतजप्यमंगलाः उपा
स्यसंध्यांविधिवत्परंतपास्ततःपुरंतेविविशुर्गजाह्वयं ३० इतिश्रीमहाभारतेशांतौराजधर्मेषु ५८
वैशंपायनउ० ततःकल्यंसमुत्थायकृतपौर्वाह्णिकक्रियाः ययुस्तेनगराकारैरथैःपांडवयादवाः
१ प्रपद्यचकुरुक्षेत्रंभीष्ममासाद्यचानघ सुखांचरजनींपृष्ट्वागांगेयंरथिनांवरं २ व्यासादीनभि
वाद्यर्षीन्सर्वैस्तैश्चाभिनंदिताः निषेदुरभितोभीष्मंपरिवार्यसमंततः ३ ततोराजामहातेजा
धर्मराजोयुधिष्ठिरः अब्रवीत्प्रांजलिर्भीष्मंप्रतिपूज्ययथाविधि ४ युधिष्ठिरउ० यएषराजन्
राजेतिशब्दश्चरतिभारत कथमेषसमुत्पन्नस्तन्मेब्रूहिपरंतप ५ तुल्यपाणिभुजग्रीवस्तुल्य
बुद्धींद्रियात्मकः तुल्यदुःखसुखात्माचतुल्यपृष्ठभुजोदरः ६ तुल्यशुक्रास्थिमज्जाच =
तुल्यमांसासृगेवच निश्वासोच्छ्वासतुल्यश्चतुल्यप्राणशरीरवान् ७ समानजन्ममरणः ᵕ
समःसर्वैर्गुणैर्नृणां विशिष्टबुद्धीनशूरांश्चकथमेकोधितिष्ठति

सत्वेसमानेपिकिंनिमित्तेयंएकस्मिन्निग्रहानुग्रहशक्तिरितिपृच्छतियइत्यादिना ५ ६ ७ ८ ॥

श्री०
शां०रा०
टी०
११

९ १३ दंडः दमनं दांडिको दंडप्रणेता १४ धर्मेणैव नतु मात्स्यन्यायेनेत्यर्थः तेनैव खेदं श्रमं मोहो वैचित्यं १५ प्रतिपत्ति विमोहात् ज्ञानलोपात् १६ प्रथमं ज्ञानलोपः ततो मोहस्ततो लोभः लोभाद्विषयाभिलाषः अभिलषितसंयोगादिंद्रियप्रीत्याख्यः

कथमेको महीं कृत्स्नां शूरवीरार्यसंकुलां रक्षत्यपि च लोकोस्य प्रसादमभिवांछति ९ एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति व्याकुले चाकुलः सर्वो भवतीति विनिश्चयः १० एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ११ नैतत्कारणमल्पं हि भविष्यति विशांपते यदेकस्मिन् जगत्सर्वं देववद्याति सन्नतिं १२ भीष्म उ० नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः यथा राज्यं समुत्पन्नमादौ कृतयुगेभवत् १३ नैव राज्यं न राजासीन्न च दंडो न दांडिकः धर्मेणैव प्रजाः सर्वा रक्षंति स्म परस्परं १४ पाल्यमानास्तथान्योन्यं नरा धर्मेण भारत खेदं परमुपाजग्मुस्ततस्तान्मोह आविशत् १५ ते मोहवशमापन्ना मनुजा मनुजर्षभ प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् १६ नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तथा लोभस्य वशमापन्नाः सर्वे भरतसत्तम १७ अप्राप्तस्याभिमर्षं तु कुर्वंतो मनुजास्ततः कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो १८ तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् रक्ताश्च नाभ्यजानंत कार्याकार्यं युधिष्ठिर १९ ॥

११

ततस्तद्विषये रागः रागात्कर्तव्याकर्तव्यप्रतिपत्तिशून्यत्वं ततः पुनर्मोह इत्यादिचक्रमाह नष्टायामिति त्रिभिः १७ १८ १९ ॥

नात्यजन्दुष्टमदुष्टंचसर्वंस्वीचक्रुरित्यर्थः २० ब्रह्मवेदः धर्मोयज्ञः २१ २४ मर्त्यैःसमतांयाताःस्वस्वाहाद्यभावेनक्षीणाः
स्मइत्यर्थः २५ नराःयजमानाःहविर्धाराभिरूर्ध्वप्रवर्षिणः ततश्चान्नाभावान्नश्यामइत्यर्थः २६ नोऽस्माकंस्वभावपेश्व

अगम्यागमनंचैववाच्यावाच्यंतथैवच भक्ष्याभक्ष्यंचराजेंद्रदोषादोषंचनात्यजन् २० वि
प्लुतेनरलोकेवैब्रह्मचैवननाशह नाशाच्चब्रह्मणोराजन्धर्मोनाशमथागमत् २१ न
ष्टेब्रह्मणिधर्मेचदेवास्त्रासःसमाविशन् तेत्रस्तानरशार्दूलब्रह्माणंशरणंययुः २२ प्रसा
द्यभगवंतंदेवंलोकपितामहं ऊचुःप्रांजलयःसर्वेदुःखवेगसमाहताः २३ भगवन्नरलो
कस्थंग्रस्तंब्रह्मसनातनं लोभमोहादिभिर्भावैस्ततोनोभयमाविशत् २४ ब्रह्मणश्चप्र
णाशेनधर्मोप्यनशदीश्वर ततःस्मसमतांयातामर्त्यैस्त्रिभुवनेश्वर २५ अधोवर्षामहिवयंनरा
स्तूर्ध्वप्रवर्षिणः क्रियाव्युपरमात्तेषांततोगच्छामसंशयं २६ अत्रनिःश्रेयसंयन्नस्तद्ध्यायस्वपिता
मह त्वत्प्रभावसमुत्थोसौस्वभावोनोविनश्यति २७ तानुवाचसुरान्सर्वान्स्वयंभूर्भगवांस्ततः
श्रेयोहंचिंतयिष्यामिव्येतुवोभीःसुरर्षभाः २८ ततोध्यायसहस्राणांशतंचक्रेस्वबुद्धिजं यत्र
धर्मस्तथैवार्थःकामश्चैवाभिवर्णितः २९ त्रिवर्गइतिविख्यातोगणएषस्वयंभुवा चतुर्थोमो
क्षइत्येवपृथगर्थःपृथग्गणः ३० ॥

र्थसत्यसंकल्पत्वादिकं २७ ३१ पृथगर्थः त्रिवर्गफलापेक्षयाविपरीतफलः पृथग्गणः त्रिवर्गसाधनापेक्षयाविपरीतसाध

मोक्षस्य त्रिवर्गो धर्मादिरन्यो निष्कामः धर्मादेर्भेदश्च सत्त्वादिगुणप्राधान्यनिमित्त इत्यर्थः दण्डात् स्थानं साम्यं वाणिज्यं वृद्धिस्तप
स्विनां क्षयश्चोराणां च भवतीत्याहार्हेन स्थानमिति ३१ नीतिजान् षड्गुणानाहात्मेति आत्मा चित्तं नीतिबलात् प्रजानां
चित्तं दण्डः स्थितमपि हि स्थितं भवति कुदेशोऽपि सुदेशो भवति कलिरपि कृतं भवति उपायाः साधनानि कृत्यं कृतिनिर्हर्त्रप्रा
योजनं सहायाः सुहृदादयः एते सर्वेऽपि विकला भवन्ति तत्र कारणं नीतिजः षड्वर्गो नीतिप्रोक्तमितश्चित्तादिरित्यर्थः ३२ त्रयीक

मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ३१ आ
त्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ३२ त्र
यी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः अमात्यर
क्षाप्रणिधी राजपुत्रस्य रक्षणं चारश्च विविधोपायः प्रणिधेयः पृथग्विधः ३४ सामभे
दः प्रदानं च ततो दण्डश्च पार्थिव उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ३५ मन्त्रश्च वा
र्णितः कृत्स्नस्तथा भेदार्थ एव च विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलं ३६ ॥

र्मकाण्डः आन्वीक्षिकी ज्ञानकाण्डः वार्त्ता कृषिवाणिज्यादिजीविकाकाण्डः दण्डनीतिः पालनविद्या एते धर्मादयस्तत्र ब्रह्मकृता
शास्त्रसहस्राध्याये दर्शिता ३३ दर्शकयाऽमात्यानामपि रक्षा कर्तव्या तदर्थं प्रणिधिः गूढचारः स च चारो विविधोपायः ब्रह्मचर्यादिवेष
धारी प्रणिधेयः पृथग्विधः एकैकस्मिन् स्थाने पृथक् पृथग्वेषास्त्रयस्त्रय इति ३४ सामादिचतुष्टयं उपेक्षा च पञ्चमीत्युपायाः ३५ वि

भयेनसंधिर्हीनः सत्कारेणमध्यमः वित्तग्रहणेउत्तमः तत्त्रयंसंधिकारणंवर्णितं ३७ चत्वारः मित्रवृद्धिः कोशसंचयश्चस्वस्य
मित्रनाशः कोशहानिश्चपरस्येति ३८ आसुरोविजयः सौप्तिकेरात्रः पंचवर्गः अमात्यराष्ट्रदुर्गाणिबलंकोशश्चपंचमः त्रिविधः
उत्तममध्यमाधमभेदेन ३९ दंडः सेना ४० विष्टिर्विष्टिगृहीताः भारवाहाः भारवाहाः चराः देशिकाः उपदेष्टारः गुरवः ४१ जंग

संधिश्चत्रिविधोभिन्नोहीनोमध्यस्तथोत्तमः भयसत्कारवित्ताख्यंकात्स्न्येनपरिवर्णितं ३७
यात्राकालाश्चचत्वारस्त्रिवर्गस्यचविस्तरः विजयोधर्मयुक्तश्चतथार्थविजयश्चह ३८ आसुरश्चै
वविजयस्तथाकार्त्स्न्येनवर्णितः लक्षणंपंचवर्गस्यत्रिविधंचात्रवर्णितं ३९ प्रकाशश्चाप्रका
शश्चदंडोथपरिशब्दितः प्रकाशोष्टविधस्तत्रगुह्यस्यचसुविस्तरः ४० रथानागाहयाश्चैवपा
दाताश्चैवपांडव विष्टिर्नावश्चराश्चैवदेशिकाइतिचाष्टमं ४१ अंगान्येतानिकौरव्यप्रकाशानि
बलस्यतु जंगमाजंगमाश्चोक्ताश्चूर्णयोगाविषादयः ४२ स्पर्शेचाभ्यवहार्येचाप्युपांशुर्विवि
धः स्मृतः अरिर्मित्रमुदासीनइत्येतेप्यनुवर्णिताः ४३ कृत्स्नामार्गगुणाश्चैवतथाभूमिगुणा
श्चह आत्मरक्षणमाश्वासः स्पशानांचान्ववेक्षणं ४४ ॥

माः महाहस्तिकादिजाः अजंगमाः रक्तशृंगिकादयः ४२ स्पर्शोवस्त्रादौअभ्यवहारेऽन्नादौ उपांशुः अभिचारादितित्रिविधो
विषयोगरूपोदंडः ४३ मार्गगुणाः ग्रहनक्षत्रादिमार्गगुणाः भूमिगुणाः चतुरशीतिभूबलानियामलोक्तानि आत्मरक्षणमंत्र

श्री· शां·रा· टी· ९२

कल्पनाः बलपुष्टिकराः योगाः विविधाभिख्याः चक्रव्यूहक्रौंचव्यूहादिनामानः ४५ उत्पाताः ग्रहयुद्धादयो धूमकेत्वादयश्च निपा-
ताः उल्कापातभूमिकंपादयः शस्त्राणां पालनं तीक्ष्णीकरणं ४६ पीडा च आपदां समूहः आपदं तस्य कालः आपत्कालः ४७ आख्या-
तं अभिमंत्रितं डिंडिमध्वनिना प्रयाणादिकथनं योगः पताकादिमंत्रणादिः तयोः संचारः श्रवणादर्शनेन परमोहनं एतत्सर्वं तत्र

कल्पना विविधाश्चापि नृनागरथवाजिनां व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलं ४५
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितं शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ४६ बलव्यसन-
युक्तं च तथैव बलहर्षणं पीडा चापत्कालश्च पत्तिज्ञानं च पाण्डव ४७ तथाख्यातविधानं च यो-
गसंचार एव च चौरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनं ४८ अग्निदैर्गरदैश्चैव प्रतिरूपकका-
रकैः श्रेणीमुख्योपजापेन वीरुधच्छेदनेन च ४९ दूषणेन च नागानां आतंकजननेन च
आराधनेन भक्तस्य प्रत्ययोपार्जनेन च ५० सप्तांगस्य च राज्यस्य ह्रासवृद्धिसमंजसं दूतसाम-
र्थ्ययोगाश्च राष्ट्रस्य च विवर्धनं ५१ ॥

उक्तमिति सर्वत्र योज्यं ४८ गरदैः विषदैः प्रतिरूपकं प्रतिमा तत्कारकैः तद्द्वारा कार्मणकारिभिः कौलिकैः श्रेणीमुख्याः बला-
ध्यक्षादयस्तेषां उपजापो भेदनं तेन वीरुधच्छेदनेन धान्यादिच्छेदेन ४९ नागानां दूषणं मंत्रतंत्रौषधादिना तेन प्रत्ययोपार्जनेन
विश्वासोत्पादनेन च परराष्ट्रस्य पीडनमुक्तमिति पूर्वेण संबंधः ५० समंजसं समत्वं ५१ ॥

९२

५२ कंटकशोधनंखलानामुन्मूलनं श्रमोमल्लक्रीडा व्यायामयोगः आयुधप्रयोगाभ्यासः त्यागोदानं ५३ अप्रसंगिताअ
संबंधः ५४ राजगुणाःउत्थानादयःसेनापतिगुणाःमौलतादयः ५५ ५६ पात्रेदानंप्रथमं ५७ विसर्गोदानंधर्मार्थंयज्ञार्थंहि

अरिमध्यस्थमित्राणांसम्यक्चावेक्षणंप्रपंचनं अवमर्दःप्रतीघातस्तथैवचबलीयसां ५२ व्यव
हारःसुहृदमश्चतथाकंटकशोधनं श्रमोव्यायामयोगश्चत्यागोद्रव्यस्यसंग्रहः ५३ अभृती
नांचभरणांभृतानांचान्ववेक्षणं अर्थस्यकालेदानंचव्यसनेचाप्रसंगिता ५४ तथाराजगुणाश्चै
वसेनापतिगुणाश्चह कारणंचत्रिवर्गस्यगुणदोषास्तथैवच ५५ दुष्टेप्सितंचविविधंभृतिश्चैवा
नुवर्तिनां शंकितत्वंचसर्वस्यप्रमादस्यचवर्जनं ५६ अलब्धलाभोलब्धस्यतथैवचविवर्द्धनं
प्रदानंचविवृद्धस्यपात्रेभ्योविधिवत्ततः ५७ विसर्गोर्थस्यधर्मार्थंकामहेतुकमुच्यते चतुर्थंव्यसा
नाघातेतथैवात्रानुवर्णितं ५८ क्रोधजानितथोग्राणिकामजानितथैवच दशोक्तानिकुरुश्रे
ष्ठव्यसनान्यत्रचैवह मृगयाक्षास्तथापानंस्त्रियश्चभरतर्षभ कामजान्याहुराचार्याःप्रोक्ता
नीहस्वयंभुवा ६० वाक्पारुष्यंतथोग्रत्वंदंडपारुष्यमेवच निग्रहोह्यात्मनस्त्यागमर्थदूषण
मेवच ६१ यंत्राणिविविधान्येवक्रियास्तेषांचवर्णिता अवमर्दःप्रतीघातःकेतनानांचभंजनं ६२

तीयंदानं कामंपत्नीयंव्यसनाघातेचतुर्थं ५८ ५९ ६० परिशेषात्वाक्पारुष्यादीनिषट्क्रोधजानि आत्मनोदेहस्य ६१ ६२

कर्मान्तः कृष्यादिफलं तत्रानुशासनं रोधः अपस्करउपकरणानि वसनं कवचादिकं उपायास्तन्निर्माणे युक्तयः ६३ तानिद्रव्या
णि षट् मणयः पशवः स्त्री वासो दास्यादिकांचनमिति ६४ ६५ मंगलं स्वर्णादि तस्यालंभनं स्पर्शः प्रतिक्रिया अलंकारणं ६६
एकस्योत्थानप्रकारः केतनजाः गृहजाः क्रियाः ध्वजारोहणाद्याः ६७ अधिकरणेषु जनोपवेशनस्थानेषु चत्वरादिषु ६८ जाति

चैत्यद्रुमावमर्दश्च रोधः कर्मान्तशासनं अपस्करोऽथगमनं तथापायाश्च वर्णिताः ६३ पणवा
नकशालेवनं भेरीणां च युधिष्ठिर उपार्जनं च द्रव्याणां परिमर्दश्च तानि षट् ६४ लब्धस्य च प्रशमनं
सतां चैवाभिपूजनं विद्वद्भिरेकीभावश्च दानहोमविधिस्तता ६५ मंगलालम्भनं चैव शरीरस्य प्रति
क्रिया आहारयोजनं चैव नित्यमास्तिक्यमेव च ६६ एकेन च यथोत्स्थेयं सत्यत्वं मधुरा गिरः =
उत्सवानां समाजानां क्रियाः केतनजास्तथा ६७ प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ हेते
भरतशार्दूल नित्यं चैवान्ववेक्षणं ६८ अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनं अनुजीविस्व
जातिभ्यो गुणेभ्यश्च समुद्भवः रक्षणं चैव पौराणां राष्ट्रस्य च विवर्द्धनं मंडलस्था च या चिंता राज
न्द्वादशराजिकी ७० द्वासप्ततिविधा वैवशरीरस्य प्रतिक्रिया देशजातिकुलानां च धर्माः सम

तो गुणतश्च समुद्भवो मान्यत्वं ६९ द्वादशानां राज्ञां समूहो द्वादशराजिकी मध्यस्थस्य विजिगीषोश्चतुर्दिक्षु चत्वारोऽरयः तेभ्यः परे च
त्वारो मित्राणि तेभ्यः परे चत्वार उदासीना इति ७० द्वासप्ततिविधा वैद्यकशास्त्रप्रसिद्धा प्रतिक्रिया संस्कारः शौचाभ्यंगादिः ७१ ॥

हेभूरिदक्षिणा ७२ मूलकर्माणि कोशवृद्धिकराणि कृष्यादीनि तेषां क्रियाकरणप्रकारः ७३ ७७ नीयतेउद्धृतार्थफलाय

धर्मश्चार्थश्चकामश्चमोक्षश्चात्रानुवर्णितः उपायश्चार्थलिप्साचविविधाभूरिदक्षिणाः ७२
मूलकर्मक्रियाचात्रमायायोगश्चवर्णितः दूषणंस्रोतसांचैववर्णितंचस्थिराम्भसां ७३ यैर्यै
रुपायैर्लोकस्तुनचलेदार्य्यवर्त्मनः तत्सर्वंराजशार्दूलनीतिशास्त्रेभिवर्णितं ७४ एतत्कृत्वा
शुभंशास्त्रंततःसभगवान्प्रभुः देवानुवाचसंहृष्टःसर्वाञ्छक्रपुरोगमान् ७५ उपकारायलो
कस्यत्रिवर्गस्थापनायच नवनीतंसरस्वत्याबुद्धिरेषाप्रभाविता ७६ दंडेनसहिताह्येषालोक
रक्षणकारिका निग्रहानुग्रहरतालोकाननुचरिष्यति ७७ दंडेननीयतेचेदंदंडंनयतिवा
पुनः दंडनीतिरितिख्यातात्रीन्लोकानभिवर्तते ७८ षाड्गुण्यगुणसारैषास्थास्यत्यग्रेमहात्म
सु धर्मार्थकाममोक्षाश्चसकलाह्यत्रशब्दिताः ७९ ततस्तांभगवान्नीतिंपूर्वंजग्राहशंकरः
बहुरूपोविशालाक्षःशिवःस्थाणुरुमापतिः ८० प्रजानामायुषोह्रासंविज्ञायभगवाञ्छिवः
संचिक्षेपततःशास्त्रंमहार्थंब्रह्मणाकृतं ८१ वैशालाक्षमितिप्रोक्तंतदिन्द्रःप्रत्यपद्यत दशाध्या
यसहस्राणिसुब्रह्मण्योमहातपाः भगवानपितच्छास्त्रंसंचिक्षेपपुरन्दरः सहस्रैःपंचभिस्तात

इदंजगत् दंडंनयतिप्रापयतिअनयावावर्ततेवा ७८ ८० संचिक्षेपसंक्षिप्तंकृतवान् ८१ विशालाक्षंबाहुदन्तकंबार्हस्पत्यमित्युपदेशोत्तरं

८४ ८६ एवंशास्त्रोत्पत्तिमुक्त्वा दण्डोत्पत्तिमाह अथेत्यादिना ८७ ८९ पंचातिगः विषयातिगः मुक्तः ९० अनंगइत्यंगास्यैवनामांतरं ९१

अध्यायानांसहस्रैस्तुत्रिभिरेवबृहस्पतिः संचिक्षेपेश्वरोबुद्ध्याबार्हस्पत्यंयदुच्यते ८४ अध्याया
नांसहस्रेणकाव्यःसंक्षेपमब्रवीत् तच्छास्त्रममितप्रज्ञोयोगाचार्योमहायशाः ८५ एवंलोकानु
रोधेनशास्त्रमेतन्महर्षिभिः संक्षिप्तमायुर्विज्ञायमर्त्यानांह्रासमेवच ८६ अथदेवाःसमागम्य
विष्णुमूचुःप्रजापतिं एकोयोर्हतिमर्त्येभ्यःश्रैष्ठ्यंवैतंसमादिश ८७ ततःसंचिंत्यभगवान्देवोना
रायणःप्रभुः तैजसंवैविरजसंसोसृजन्मानसंसुतं ८८ विरजास्तुमहाभागःप्रभुत्वंभुविनैच्छ
त न्यासायैवाभवद्बुद्धिःप्रणीतातस्यपांडव ८९ कीर्तिमांस्तस्यपुत्रोभूत्सोपिपंचातिगोभवत्
कर्दमस्तस्यतुसुतःसोप्यतप्यन्महत्तपः ९० प्रजापतेःकर्दमस्यत्वनंगोनामवैसुतः प्रजाना
रक्षितासाधुर्दंडनीतिविशारदः ९१ अनंगपुत्रोतिबलोनीतिमानभिगम्यवै प्रतिपेदेमहा
राज्यमथेंद्रियवशोभवत् मृत्योस्तुदुहिताराजन्सुनीथानाममानसी प्रख्यातात्रिषुलो
केषुयासावेनमजीजनत् ९३ तंप्रजासुविधर्माणंरागद्वेषवशानुगं मंत्रपूतैःकुशैर्जघ्नुरृ
षयोब्रह्मवादिनः ९४ ममंथुर्दक्षिणंचोरुमृषयस्तस्यमंत्रतः ततोस्यविकृतोजज्ञेह्रस्वांगः
पुरुषोभुवि ९५ दग्धस्थूणप्रतीकाशोरक्ताक्षःकृष्णमूर्धजः निषीदेत्येवमूचुस्तमृषयोब्रह्मा

९७ ९९ ९० ९२ ९४ ९६ स्ववशः स्वोनीद्रियाणीतद्दशः नकदाचनभविष्यातिमीशोषः स्वतिस्वस्थःपाठः ७ ८ ९
तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः येचान्येविंध्यनिलयाम्लेच्छाः शतसहस्रशः
९७ भूयोस्यदक्षिणंपाणिंममंथुस्तेमहर्षयः ततः पुरुषउत्पन्नोरूपेणेंद्रइवापरः ९८ कवची
बद्धनिस्त्रिंशः सशरः सशरासनः वेदवेदांगविच्चैवधनुर्वेदेचपारगः ९९ तंदंडनीतिः सक
लाश्रितारजन्नरोत्तमं ततस्तुप्रांजलिर्वैन्योमहर्षीस्तानुवाचह ९० सुसूक्ष्मामेसमुत्पन्नाबुद्धि
र्धर्मार्थदर्शिनी अनयाकिंमयाकार्यंतन्मेतत्त्वेनशंसत १ यन्मांभवंतोवक्ष्यंतिकार्यमर्थसमन्वि
तं तदहंवैकरिष्यामिनात्रकार्याविचारणा २ तमूचुस्तत्रदेवास्तेतेचैवपरमर्षयः नियतोयत्र
धर्मोवैतमशंकः समाचर ३ प्रियाप्रियेपरित्यज्यसमः सर्वेषुजंतुषु कामक्रोधौचलोभंचमानं
चोत्सृज्यदूरतः यश्चधर्मात्प्रविचलेल्लोकेकश्चनमानवः निग्राह्यस्तेस्वबाहुभ्यांशश्वद्धर्ममवे
क्षता ५ प्रतिज्ञांचाधिरोहस्वमनसाकर्मणागिरा पालयिष्याम्यहंभौमंब्रह्मइत्येवचासकृ
त् ६ यश्चात्रधर्मोनित्योक्तोदंडनीतिव्यपाश्रयः तमशंकः करिष्यामिस्ववशोनकदा
चन ७ अदंड्यामेद्विजाश्चेतिप्रतिजानीहिहेविभो लोकंचसंकरात्कृत्स्नंत्रातास्मीतिपरंत
प ८ वैन्यस्ततस्तानुवाचदेवानृषिपुरोगमान् ब्राह्मणामेमहाभागानमस्याः पुरुषर्षभाः ९

श्री॰
ग्रं॰ग॰
टी॰
११५

११ सांवत्सरोज्योतिषिकः १२ आत्मनास्वशरीरेणसहाष्टमः पृथुर्विष्णोःसकाशादित्यर्थः तथाहिविष्णुःप्रथमः विरजाद्वितीयःकी

एवमस्त्वितिवैन्यस्तुतेनप्रोक्तोब्रह्मवादिभिः पुरोधाश्चाभवत्तस्यशुक्रोब्रह्ममयोनिधिः १० मंत्रि
णोवालखिल्याश्चसारस्वत्योगणास्तथा महर्षिर्भगवान्गर्गस्तस्यसांवत्सरोभवत् ११ आत्मना
ष्टमःइत्येवख्यातिरेषापरानृषु उत्पन्नौवंदिनौचास्यतत्पूर्वौसूतमागधौ १२ तयोःप्रीतोददौराजापृथु
वैन्यःप्रतापवान् अनूपदेशंसूतायमगधंमागधायच १३ समंतावसुधायाश्चसममप्युपपादयत्
वैषम्यंहिपरंभूमेरासीदितिचनःश्रुतं १४ मन्वंतरेषुसर्वेषुविषमाजायतेमही उज्जहारततोवैन्यः
शिलाजालान्समंततः १५ यज्ञःकोटयामहाराजतेनशैलाविवर्द्धिताः सविष्णुनाचदेवेनशक्रे
णाविबुधैःसह १६ ऋषिभिश्चप्रजापालैर्ब्राह्मणैश्चाभिषेचितः तंसाक्षात्पृथिवीभेजेरत्नान्या
दायपांडव १७ सागरःसरितांभर्ताहिमवांश्चाचलोत्तमः शक्रश्चधनमक्षय्यंप्रादात्तस्मैयुधिष्ठि
र १८ रुक्मंचापिमहामेरुःस्वयंकनकपर्वतः यक्षराक्षसभर्ताचभगवान्नरवाहनः १९ य
क्षेचकामेचसमर्थंप्रददौधनं हयारथाश्चनागाश्चकोटिशःपुरुषास्तथा २० प्रादुर्बभूवुर्वै
न्यस्यचिंतनादेवपांडव नजरानचदुर्भिक्षंनाधयोव्याधयस्तथा २१ ॥

र्तिमांस्तृतीयः कर्दमश्चतुर्थः अनंगः पंचमः अतिबलः षष्ठः वेनः सप्तमः पृथुरष्टम इति १२ १३ १४ १५ १६ १९ २० २१

२२ २५ प्रथिताःवनत्ताचेतिविग्रहेवर्णलोपविकाराभ्यांपृथिवी २६ स्थापनंमर्यादां २७ २८ दंडेति रक्षितंतंराज्यंनश्चान्यो

सरीसृपेभ्यःस्तेनभ्योनचान्योन्यात्कदाचन भयमुत्पद्यतेतत्रतस्यराज्ञोभिरक्षणात् २२
आपस्तस्तंभिरेचास्यसमुद्रमभियास्यतः पर्वताश्चददुर्मार्गंध्वजभंगश्चनाभवत् २३ तेनेयंपृ
थिवीदुग्धासस्यानिदशसप्तच यक्षराक्षसनागैश्चापीप्सितंयस्ययस्ययत् २४ तेनधर्मोत्तरश्चा
यंकृतोलोकोमहात्मना रंजिताश्चप्रजाःसर्वास्तेनराजेतिशब्द्यते २५ ब्राह्मणानांक्षतत्रा
णात्ततःक्षत्रियउच्यते प्रथिताधर्मतश्चेयंपृथिवीबहुभिःस्मृता २६ स्थापनंचाकरोद्विष्णुः
स्वयमेवसनातनः नातिवर्तिष्यतेकश्चिद्राजंस्त्वामितिभारत २७ तपसाभगवान्विष्णुरावि
वेशचभूमिपं देववन्नरदेवानांनमतेयंजगन्नृप २८ दंडनीत्याचसततंरक्षितंतंनरेश्वर
नाधर्षयत्तथाकश्चिच्चारनित्यान्द्दर्शनात् २९ ॥

नश्चाधर्षयेत् तत्रहेतुःचाराणांनिष्पन्दःसंचारस्तद्वायद्दर्शनंलोकस्यज्ञातस्यदृष्टाचपालनंततइत्यर्थः २९ ॥

आत्मनाचिन्तेनकारणैः क्रियाभिश्चसमस्यमहीक्षितः कर्मेतिसंबंधः ३० विष्णुर्भूमिंप्रविश्यअधिविशत्युक्तंतत्रोपपत्तिःकहत्यर्द्धेन ३१

शुभंहिकर्मराजेन्द्रशुभत्वायोपकल्प्यते आत्मनाकारणैश्चैवसमस्येहमहीक्षितः ३० कोहे
त्वयंहृषीकेशतिष्ठेल्लोकोदैवादृतेगुणात् विष्णोर्ललाटात्कमलंसौवर्णमभवत्तदा ३१ श्रीः संभूता
यतोदेवीपत्नीधर्मस्यधीमतः श्रियः सकाशादर्थश्चजातोधर्मेणपाण्डव ३२ अर्थोद्धर्मस्तथै
वार्थः श्रीश्चराज्येप्रतिष्ठिता सुकृतस्यक्षयाच्चैवस्वर्लोकादेत्यमेदिनीं ३३ पार्थिवोजायते
तातदंडनीतिविशारदः महत्वेनचसंयुक्तोवैष्णवेननरोभुवि बुद्ध्याभवतिसंयुक्तोमाहात्म्यं
चाधिगच्छति ३४ स्थापितंचततोदेवैर्नकश्चिदतिवर्तते तिष्ठत्येकस्यचवशेतंचेदनुविधी
यते ३५ शुभंहिकर्मराजेन्द्रशुभत्वायोपकल्प्यते तुल्यलोकस्ययस्यायंलोकोवचसितिष्ठ
ति ३६ ॥

त्रीपालयित्री ३२ ३३ ३४ स्थापितंअभिषिक्तं एकस्यराज्ञोवशेहृदंति तंचेदंलक्ष्मीक्षात्पनविधीयतेइदंजगद्विधानसम
र्थनभवति ३५ तुल्यस्यकस्याघवयवैःसमस्य ३६ ॥ 

अस्यराज्ञः यः सौम्यंस्वंअदादीतत्सुभगादिरूपंचैवंपश्यतिअस्यदृष्टः राजावशानुगः आज्ञाकारीतिज्ञेयं ३७ महत्त्वादितिदंड

योऽस्ययोऽस्यशुभंपश्येतसौम्यंसौम्यवशानुगः सुभगंचार्थवंतंचरूपवंतंचपश्यति ३७ महत्त्वा
त्तस्यदंडस्यनीतिर्विस्पष्टलक्षणा नयचारश्चविपुलोयेनधर्ममिदंततं ३८ आगमश्चपुरा
णानांमहर्षीणांचसंभवः तीर्थवंशश्चवंशश्चनक्षत्राणांयुधिष्ठिर ३९ सकलंचातुराश्रम्यं
चातुर्होत्रंतथैवच चातुर्वर्ण्यंतथैवात्रचातुर्विद्यंचकीर्तितं इतिहासाश्चवेदाश्चन्यायःकृत्स्न
श्चवर्णितः तपोज्ञानमहिंसाचसत्यासत्येनयःपरः ४१ वृद्धोपसेवादानंचशौचमुत्थानमेवच
सर्वभूतानुकंपाचसर्वमत्रोपवर्णितं ४२ भुविवाचोगतंयच्चतच्चसर्वंसमर्पितं तस्मिन्पै
तामहेशास्त्रेपांडवैतन्नसंशयः ४३ ततोजगतिराजेन्द्रसततंशब्दितंबुधैः देवाश्चनरदेवाश्च
तुल्याइतिविशांपते ४४ एतत्तेसर्वमाख्यातंमहत्त्वंप्रतिराजसु कार्त्स्न्येनभरतश्रेष्ठकिमन्य
दिहवर्तते ४५ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मेषु ५९ वैशंपायनउवाच ततः
पुनःसगांगेयमभिवाद्यपितामहं प्रांजलिर्नियतोभूत्वापर्यपृच्छद्युधिष्ठिरः १ ॥

सामर्थ्यादेवलोकेनीत्यादिकंदृश्यतइत्यर्थः ३८ आगमादिकंचात्रग्रंथेकीर्तितं ३९ ४२ ४५ इतिश्रीशांतौराजधर्मेषु ५९ ततः

सर्ववर्णानांअनुलोमविलोमजादीनां चातुर्वर्ण्यस्ययेआश्रमाःब्राह्मणस्यचत्वारआश्रमाःक्षत्रियस्यत्रयोवैश्यस्यद्वौ
शूद्रस्यैकइतितेषां २ ३ ४ ५ ६ सर्ववर्णधर्मानाअहमक्रोधइतिसार्द्धेन ७ ८ तत्राध्ययने तावत्तैवर्णैर्नैष्ठिकःकृतार्थो
केधर्माःसर्ववर्णानांचातुर्वर्ण्यस्यकेपृथक् चतुर्वर्णाश्रमाणांचराजधर्माश्चकेमताः २ केन
वैवर्द्धतेराष्ट्रंराजाकेनविवर्द्धते केनपौराश्चभृत्याश्चवर्द्धन्तेभरतर्षभ ३ कोशंदण्डंचदुर्गंचसहायान्वा
मन्त्रिणस्तथा ऋत्विक्पुरोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ४ केषुविश्वसितव्यंस्याद्राज्ञाकस्यां
चिदापदि कुतोवात्मादृढंरक्ष्यस्तन्मेब्रूहिपितामह ५ भीष्मउ० नमोधर्मायमहतेनमःकृष्णायवे
धसे ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्यामिशाश्वतान् ६ अक्रोधःसत्यवचनंसंविभागःक्षमातथा
प्रजनःस्वेषुदारेषुशौचमद्रोहएवच ७ आर्जवंभृत्यभरणंनवैतेसार्ववर्णिकाः ब्राह्मणस्यतुयोधर्म
स्तंतेवक्ष्यामिकेवलं ८ दममेवमहाराजधर्ममाहुःपुरातनं स्वाध्यायाभ्यसनंचैवतत्रकर्मसमाप्य
ते ९ तंचेद्वित्तमुपागच्छेद्वर्त्तमानंस्वकर्मणि अकुर्वाणंविकर्माणिशान्तंप्रज्ञानतर्पितं १० कुर्वी
तापत्यसंतानमथोदद्याद्यजेतच संविभज्यहिभोक्तव्यंधनंसद्भिरितीर्यते परिनिष्ठितकार्यस्तुस्वाध्या
येनैवब्राह्मणः कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते १२ क्षत्रियस्यापियोधर्मस्तंतेवक्ष्यामिभा
भवतीत्यर्थः ९ स्वयमुपागतेवित्तेदारक्रियापूर्वकंअपत्यसंतानमिच्छेत्सइत्याहद्वाभ्यांतंचेदिति ९ १५ ॥ रत्न दद्या

१६ १७ २४ षण्मासं येन नूनं तत्तको वैश्यपकस्यात्तीरं स्ववेतनं हरेत् शतस्य तत्तको वर्षे एकं गोवृषमिथुनं वेतनं हरेत् वाणिज्येन तस्य

प्रवित्तेन देहेन सममरा घोनिवर्त्तते क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः १६ एवं हि क्षत्रबंधूनां
मार्गमार्गः प्रधानतः नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात् १७ दानमध्ययनं यज्ञो राज्ञां तेमा
विधीयते तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता १८ स्वेषु धर्मेषु व्यवस्थाप्य प्रजाः सर्वा महीपतिः ध
र्मेण सर्वं कृत्यानि शमनिष्ठानि कारयेत् १९ परिनिष्ठितकार्यस्तु नृपतिः परिपालनात् कुर्यादन्यन्न
वा कुर्यादैन्द्रो राजन्य उच्यते २० वैश्यस्यापि हि यो धर्मस्तं ते वक्ष्यामि शाश्वतं दानमध्ययनं यज्ञः शौ
चेन धनसंचयः २१ पितृवत्पालयेद्वैश्यो युक्तः सर्वान्पशूनिह विकर्म तद्भवेदन्यत्कर्म यत्स समा
चरेत् २२ रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून् २३
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनं २४ षण्णामेकां पि
बेद्धेनुं शताच्च मिथुनं हरेत् लब्धाच्च सप्तमं भागं तथा शृङ्गे कला खुरे २५ सस्यानां सर्वबीजानामे
षा सांवत्सरी भृतिः न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति २६ वैश्ये चेच्छति नान्येन रक्षित
व्याः कथंचन शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत २७ प्रजापतिर्हि वर्णानां दासं शूद्रमका
ल्पयत् तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते २८ ॥

व्यात्सप्तमं धनिकाद्धरेत् २५ एवं सस्यानामपि सप्तममेवांशं हरेत् २६ २७ २८ ॥

२९ ३० कुर्वीतसंचयानित्यपकृष्यते धार्मिकःधर्मप्रधानःनतुभोगाल्लोभप्रधानः ३१ औशीरंवेष्टनं वीरणमूलकृताच्छदिः ३२ यातयामा
निभुक्तभोगानिजीर्णानीतियावत् ३३ द्विजातीनामध्येयंकश्चित्प्रति तेनद्विजातिना ३४ ३५ अतिरेकेणस्वकुटुंबपोषणादाधिक्येन भर्ता
पोष्यः ३६ अन्यत्रस्वेत्यार्जितमपिधनंशूद्रस्यस्वामिनैवहार्यंयथोक्तं त्रयएवाधनाराजन्भार्यादासस्तथासुतः यत्तेसमधिगच्छंतियस्यै

तेषांशुश्रूषणाच्चैवमहत्त्वमवाप्नुयात् शूद्रएतान्परिचरेत्त्रीन्वर्णाननुपूर्वशः २९ संचयांश्चनकुर्वी
तजातुशूद्रःकथंचन पापीयान्हिधनंलब्ध्वावशेकुर्याद्गरीयसः ३० राज्ञावासमनुज्ञातःकामंकुर्वीत
धार्मिकः तस्यवृत्तिंप्रवक्ष्यामियच्चतस्योपजीवनं ३१ अवश्यभरणीयोहिवर्णानांशूद्रउच्यते छत्रंवे
ष्टनमौशीरमुपानद्व्यजनानिच ३२ यातयामानिदेयानिशूद्रायपरिचारिणे अधार्याणिविशीर्णानिवसना
निद्विजातिभिः ३३ शूद्रायैवप्रदेयानितस्यधर्मधनंहितत् यश्चकश्चिद्द्विजातीनांशूद्रःशुश्रूषुराव्रजेत् क
ल्प्यांतेनतुतेप्राहुर्वृत्तिंधर्मविदोजनाः ३४ देयःपिंडोनपत्यायभर्तव्यौवृद्धदुर्बलौ ३५ शूद्रेणतुनहातव्यो
भर्ताकस्यांचिदापदि अतिरेकेणभर्तव्योभर्ताद्रव्यपरिक्षये ३६ नहिस्वमस्तिशूद्रस्यभर्तृहार्यधनोहि
सः उक्तस्त्रयाणांवर्णानांयज्ञस्तस्यचभारत ३७ स्वाहाकारवषट्कारौमंत्रःशूद्रेनविद्यते तस्माच्छूद्रः
पाकयज्ञैर्यजेताव्रतवान्स्वयं पूर्णपात्रमयीमाहुःपाकयज्ञस्यदक्षिणां ३८ ॥

तत्तस्यतद्धनमिति तस्माद्युक्तंभर्तृहार्यधनोहिसइति तस्यचशूद्रस्यचामंत्रकोयज्ञोस्तीत्यर्थः ३७ तस्मादितिपाकयज्ञैःशुद्धद्रव्यैर्गृहशांतिवैश्व
देवादिभिर्यजेत अव्रतवान्श्रौतव्रतोपायहीनः अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौतुपुष्कलं पुष्कलानितुचत्वारिपूर्णपात्रंप्रचक्षतेइत्युक्तला
क्षणपूर्णपात्रमयी यज्ञेनवामिपूर्णपात्राणामेवगणनायज्ञानुसारेण मंत्रास्तेषांपौराणिकाःनाममंत्रावाप्रणववर्जिताइतिसर्वशूद्रयज्ञत्व
कंद्रष्टव्यं ३८ ॥

सहस्राणां शतं लक्षं पूर्णपात्राणि ऐन्द्राग्नस्य विधिर्यथा श्रौते चरुः पशोर्वा विधिस्तथैवामन्त्रकं अस्य विधानं तेन ३९
न तु तस्माच्छूद्रो यज्ञे न वक्लृप्त इति श्रुतेः कथमस्यामन्त्रोपि यज्ञ इत्याशङ्क्याह यत इति सर्ववर्णानां त्रैवर्णिकानां यो यज्ञः स
तस्यैव शूद्रस्यैव भवति तस्य तत्सेवकत्वात् यथा हि श्रद्धया गुर्वग्नीन् परिचरन्त उपकोसलस्याग्नयो ब्रह्मविद्यां दत्तवन्तः एवं श्रद्धया
ब्राह्मणादीनाराधयतः शूद्रस्यापि ब्राह्मणकृतयज्ञफलभागित्वमस्त्येवेत्यर्थः सार्द्धश्लोकः ४० ४१ ऋषयः सन्तानानि तेन सर्वो

शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतं ३९ यतो
हि सर्ववर्णानां यज्ञस्तस्यैव भारत अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ४० दैवतं हि महच्छ्र
द्धा पवित्रं यजतां च यत् दैवतं हि परं विप्राः स्वेन स्वेन परस्परं हितं ४१ अयजन्निह सत्रैस्तै
स्तैः कामैः समाहिताः संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु ऋषयः ४२ देवानामपि ये देवा यद्ब्रू
युस्ते परं हितं तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ४३ ऋग्यजुःसामवित्पूज्यो नि
त्यं स्याद्देववद्द्विजः अनृग्यजुरसामा च प्राजापत्य उपद्रवः ४४ ॥

णां वर्णा ब्राह्मणजत्वाद्ब्रह्मैव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः ४२ यद्ब्रूयुस्ते नत्तेनैव परं हितं वर्णैः सशूद्रैः सर्वयज्ञाः श्रौताः स्मार्त्ता
श्च न काम्यया स्वभावात् संसृज्यन्त इति पूर्वस्योपसंहारः ४३ अत्र हेतुमाह ऋगिति द्विजस्त्रैवर्णिकः पूज्यः शूद्रेण उपद्रवतीति ता
त्समीपगामित्वादुपद्रवः दासः शूद्रः स वेदहीनोपि प्राजापत्यः प्रजापतिदेवताकः यथाग्नेयो ब्राह्मण ऐन्द्रः क्षत्रियस्तद्वत् ४४ ॥

श्री· शा·रा· टी· ९९

तथाचमानसेदेवतोद्देशेनद्रव्यत्यागात्मकेयज्ञेसर्वेवर्णाअधिक्रियंतइत्यर्थः सार्धश्लोकः अस्यमानसयज्ञकर्तुःदेवाः इतरेजनाश्चनईं
हंतेइतिनअपितुश्रद्धापूतत्वात्सर्वेप्यस्ययज्ञेभागंकामयंतइत्यर्थः नास्ययज्ञस्येतिपाठेएनंयज्ञंदेवाअपिकर्तुंनईहंतेनसमर्थाभवंती
तियोज्यं ४५ नन्वग्नीहीनस्यशूद्रस्यकथंपाकयज्ञेष्वधिकारइत्याशंक्याह स्वंदैवतंब्राह्मणाःस्वेननित्यंपरान्वर्णानायजन्नैवमासी
त्अथरोवितानःसंसृष्टोवैश्योब्राह्मणास्त्रिषुवर्णेषुयज्ञसृष्टइति ब्राह्मणस्त्रयाणामपिवर्णानांस्वंअसाधारणंदैवतंअतःकारणा
त्तेस्वेआत्मीयाःब्राह्मणाःपरान्वर्णानुद्दिश्यतआयजन्नितिनैवंआसीत्अपितुअशुककामेनाशुकशर्मणांदृष्टतोऽशुकयज्ञेनयत्वा·

यज्ञोमनीषयातातसर्ववर्णेषुभारत नास्ययज्ञकृतोदेवाईहंतेनेतरेजनाः ततःसर्वेष्ववर्णेषुश्र
द्धायज्ञोविधीयते ४५ स्वंदैवतंब्राह्मणाःस्वेननित्यंपरान्वर्णानायजन्नैवमासीत् अथरोविता
नःसंसृष्टोवैश्योब्राह्मणास्त्रिषुवर्णेषुयज्ञसृष्टः ४६ ॥

इत्युद्देशंकृत्वाऽयजन्नेवयागंकृतवंतएवेत्येवमेवासीत् एवंपुराकल्पप्रदर्शनमुखेनायंविधिर्ज्ञेयः अयजन्नितिपरस्मैपदप्रयोगस्त्व
परगामित्वात्क्रियाफलस्ययुक्तः अथरोनीचःवैवाहिकात्श्रौतानाद्वान्यत्वात् वितानोअग्नीनांविस्तारः तस्यअग्नयोलौकिकाएव
पंचकुंडीविधानादौज्ञेयाः एककुंडएवत्वेकएवलौकिकःसएवाथावल्लयज्ञक्रचहोम्यस्मादित्युपक्रम्याग्निप्रतिष्ठाप्येतिगृह्यकारैर्द
र्शितः संसृष्टइतितत्रापिमंत्रसंसर्गउच्यते वैश्यःवैश्यगृह्यादानीतः श्रौतोपिविट्कुलाद्वित्तवतोवेतिवैश्यगृह्याद्दक्षिणाग्न्यर्थमग्न्या
नयनंदृश्यते यस्मादेवंतस्मात्ब्राह्मणास्त्रिष्वपिवर्णेषुयज्ञःसृष्टायेनसयज्ञस्यस्रष्टाभवतीत्यर्थः पाठांतरेवैश्यपदेविभक्तिलोपआर्षः

९९ ४६

यस्मात्रिषुवर्णेषुब्राह्मणोयत्रस्रष्टातस्मात्सर्वेऽपिवर्णाः ऋजवःसात्वएव यत्रसंयोगात् एवंधर्मसाम्येपिजातिसाम्यंनास्ती
त्याशंक्याह जातिवर्णाअपिक्षत्रियवैश्यशूद्रास्तस्यब्राह्मणस्यविकारास्तेविद्यादिकन्याहूत्यनेमूर्द्धाभिषिक्तादेसंसृज्यंतएवतेनय
र्मतोजन्मतश्चसर्ववर्णाब्राह्मणसंसृष्टाइतिस्थितं तत्रहेतुमाह एकइति नेशतत्त्वनिश्चयेक्रियमाणेएकोविप्रोब्रह्मैवप्रथमोब्रा
ह्मणःसृष्टोजातः ब्राह्मणसंततित्वात्सर्वेप्येतेब्राह्मणाएवेत्यर्थः तत्रदृष्टांतः एकंसामेति अकारोवैसर्वावाक्सैषास्पर्शोष्माभिर्व्य

तस्माद्वर्णाऋजवोजातिवर्णाःसंसृज्यंतेतस्यविकारएव एकंसामयजुरेकंऋगेकाविप्रश्चै
कोनिश्चयेतेषुसृष्टः ४७ अत्रगाथायज्ञगीताःकीर्तयंतिपुराविदः वैखानसानांराजेंद्रमुनी
नांयष्टुमिच्छतां ४८ उदितेनुदितेवापिश्रद्दधानोजितेंद्रियः वह्निंजुहोतिधर्मेणश्रद्धावैकारणं
महत् ४९ यत्स्कन्नमस्यतत्पूर्वंयदस्कन्नंतदुत्तरं बहूनियज्ञरूपाणिनानाकर्मफलानिच ५०

ज्यमानाबह्वीनानारूपाभवतीतिश्रुतेरेकंअकाररूपमेवअंतरंयथासामादिरूपंतथाब्रह्मैवब्राह्मणादिरूपंइत्यर्थः ४८ वैखा
नसानांवानप्रस्थानां गाथाःयज्ञस्तुतिश्लोकाः यज्ञगीताःविष्णुगीताः ४८ ४९ यत्स्कन्नमितिरौद्रेगाविसहायत्वमुपावसृष्टमि
त्यादिबह्वृचब्राह्मणेषोडशकलमग्निहोत्रमुक्तंतत्रमाहुतंविष्यंदमानमितिस्कन्नमपिमहदेवतत्त्वंभवतीतितत्पूर्वंआद्यंअग्निहोत्रंय
त् अस्कन्नंयथाविधिहुतंतदुत्तरंसर्वोत्कृष्टंबहूनीतिरौद्रादीति ५० ॥

तानिषोडशाग्निहोत्ररूपाणि ५१ यत्तुविस्रंयष्टुंयत्तदानादिनाआराधितं ५२ ऋषयश्शंसिसाईः ५२ श्रद्धापवित्रंयथास्यात्तथाय
ष्टव्यमितिसंबंधः ५४ षष्टितमः ६० आश्रमा १ वानप्रस्थमितिपाठक्रमोनविवक्षितः चतुर्थंसंन्यासंतंवर्जदायरणसंस्कारंमुडिना

तानियःसंप्रजानातिज्ञाननिश्चयनिश्चितः द्विजातिःश्रद्धयोपेतःसयष्टुंपुरुषोर्हति ५१ स्तेनोवायदि
वापापोयदिवापापकृत्तमः यष्टुमिच्छतियज्ञंयःसाधुमेववदंतितं ५२ ऋषयस्तंप्रशंसंतिसाधुचैव
तदसंशयं सर्वथासर्वदावर्णैर्यष्टव्यमितिनिर्णयः नहियज्ञसमंकिंचित्त्रिषुलोकेषुविद्यते ५३ य
स्मादयष्टव्यमित्याहुःपुरुषेणानुसूयता श्रद्धापवित्रमाश्रित्ययथाशक्तियथेच्छया ५४ इतिश्रीम
हाभारतेशांतिपर्वणिराजधर्मेषु ६० भीष्मउवाच आश्रमाणांमहाबाहोशृणुसत्यपराक्रम चतु
र्णामपिनामानिकर्माणिचयुधिष्ठिर १ वानप्रस्थंभैक्ष्यचर्यंगार्हस्थ्यंचमहाश्रमं ब्रह्मचर्याश्रमंप्रा
हुश्चतुर्थंब्राह्मणैर्वृतं २ जटाधरणसंस्कारंद्विजातित्वमवाप्यच आधानादीनिकर्माणिप्राप्यवेदम
धीत्यच ३ सदारोवाप्यदारोवाआत्मवान्संयतेंद्रियः वानप्रस्थाश्रमंगच्छेत्कृतकृत्योगृहाश्रमात् ४
तत्रारण्यकशास्त्राणिसमधीत्यसधर्मवित् ऊर्ध्वरेताःप्रव्रजित्वागच्छत्यक्षरसात्मतां ५ ॥

चवदंति २ द्विजातित्वमवाप्यवेदमधीत्यआधानादीनिकर्माणिप्राप्यवानप्रस्थाश्रमंगच्छेदित्यन्वयः ३ ४ आरण्यकानांवानप्रस्था
नांशास्त्राणिशासनानिसमधीत्यसम्यगनुष्ठानेनप्राप्य अक्षरसात्मतांकैवल्यं ५ ॥

एतानि द्विजत्वावाप्त्यादीनि एवशब्दः प्रकारांतरमोक्षप्राप्तिं वारयति ६ ब्रह्मचर्यादेव प्रव्रजेदिति श्रुतेर्मध्यममाश्रमद्वयमनि
त्यमित्याह चरितेति ७ ८ विकारः कामसंकल्पादयस्तद्वत् चित्तं तद्रहितो निर्विकारवान् अमनस्कः इत्यर्थः ९ गृहिणोपि
मुक्तिमाहाधीत्येति समाहितः योगयुक्तः सन् गार्हस्थ्यधर्मं यः प्रचरेत् सोपि अक्षरसात्मतां गच्छतीति पूर्वेणसंबंधः १० अस

एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसां कर्त्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ६ चरितब्रा
ह्मचर्यस्य ब्राह्मणस्य विशांपते भैक्षचर्यास्वधीकारः प्रशस्तः इह मोक्षणः ७ यत्रास्तमितशा
यी स्यान्निराशीरनिकेतनः यथोपलब्धजीविस्यान्मुनिर्दान्तो जितेंद्रियः ८ निराशीः स्यात्सर्व
समो निर्भोगो निर्विकारवान् विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मतां ९ अधीत्य वेदा
न् कृत्वा सर्वं कृत्यः संतानमुत्पाद्य सुखानि भुक्त्वा समाहितः प्रचरेद्दुश्चरं यो गार्हस्थ्यधर्मं मुनिध
र्मजुष्टं १० स्वदारतुष्टस्तु ऋतुकालगामी नियोगसेवी न शठो न जिह्मः मिताशनो देवरतः कृत
ज्ञः सत्यो मृदुश्चानृशंसः क्षमावान् ११ दांतो विधेयो हव्यकव्येऽप्रमत्तो ह्यन्नस्य दाता सततं द्वि
जेभ्यः अमत्सरी सर्वलिंगिप्रदाता वैताननित्यश्च गृहाश्रमी स्यात् १२ ॥

माहितं प्रत्याह स्वदारेति शठः धूर्त्तः जिह्मः कुटिलः ११ विधेयः गुरुशास्त्राज्ञापालकः अप्रमत्तः अवहितः सर्वेभ्यो लिंगयुक्तेभ्य आ
श्रमेभ्यः प्रदाता ऽन्नादेः लिंगिप्रदातेति मध्यमपदलोपी समासः वैतानं श्रौतकर्म तत्र नित्यः १२ ॥

श्री· शां· रा· टी· १२१

१३ १५ वृत्तिंजीविकांविशोध्यशुद्धांकृत्वान्यायागतेनधनेनजीवन्नित्यर्थः १६ तस्येति तस्यगृहस्थस्यस्वदेहपरित्यागात्समाहि तश्चेदिहैवदेहाभिमानत्यागात्स्वसमाहितस्यमरणानंतरंइष्टाः कामाः विषयाः दार्ढ्यकाशेस्वर्गेवाउपतिष्ठंति कामाः अनंतया इतिच्छेदः सर्वतोविशिरोमुखोऽस्यनेनकामानांकिंकरत्वमिववश्यत्वमुक्तं यत्रयत्रदेशेकालेवायोगयमयोगंचा

अथात्रनारायणगीतमाहुर्महर्षयस्तातमहानुभावाः महार्थमत्यंततपःप्रयुक्तंतदुच्यमानंहिमयानिबोध १३ सत्यार्जवंचातिथिपूजनंचधर्मस्तथार्थश्चरतिस्वदारैः निषेवितव्यानिसुखानिलोकेह्यस्मिन्परेचैवमतंममैतत् १४ भरणंपुत्रदाराणांवेदानांधारणंतथा वसतामाश्रमंश्रेष्ठंवदंतिपरमर्षयः १५ एवंहियोब्राह्मणोयज्ञशीलोगार्हस्थ्यमध्यावसते यथावत् गृहस्थवृत्तिंप्रविशोध्यसम्यक्स्वर्गेविशुद्धंफलमाप्नुतेस १६ तस्यदेहपरित्यागादिष्टाःकामाह्यनंताः आनंत्यायोपतिष्ठंतिसर्वतोक्षिशिरोमुखाः १७ स्वदंतेकोजपन्नेकःसर्वानेकोयुधिष्ठिर एकस्मिन्नेवचाचार्येशुश्रूषुर्मलपंकवान् १८ ब्रह्मचारीव्रतीनित्यंनित्यंदीक्षापरोवशी परिचर्यांतथावेदंकृत्यंकुर्वन्वसेत्सदा १९ शुश्रूषांसततंकुर्वन्गु

श्वनप्रवत्रस्थसर्वशः २० ॥

[illegible] षट्कर्मनिरत [illegible]

वासकल्पयतितत्सर्वंसद्यउपतिष्ठतीत्यर्थः १७ ब्रह्मचारिणोपिकैवल्यमाहस्मरन्निति सर्वान्देवान्मंत्रांश्च १८ दीक्षानियमाविशेषस्वीकारःवेदंवेदांतान् कृत्यंकर्तव्यमर्हध्यानयोगं १९ तदविरोधेनशुश्रूषांचकुर्वन् निहन्ताःनिहतिमान् २० ॥

१२१

अधिकारेणानिग्रहानुग्रहेण २९ एकषष्टितमः ६१ शिवान् १ उक्तविशेषणविशिष्टाःब्राह्मणस्यैवधर्माइत्याशयेनाहब्राह्म
णस्येति एतेनशूद्रस्यममापिब्राह्मणस्यहिंस्रोधर्मःकामकारप्रवृत्तनविधिचोदितइतिदर्शितं वदत्यतिचमेमानधर्मेषु यज्ञयज्ञैः कथंहिं

नचरत्यधिकारेणसेवेतद्विषतोनच एषोश्रमपदस्तातब्रह्मचारिणइष्यते २९ इतिश्रीमहाभा
रतेशांतिपर्वणिराजधर्मेचातुराश्रमधर्मः ६१ युधिष्ठिरउ॰ शिवान्सुखान्महोदर्कानहिंस्रान्लो
कसंमतान् ब्रूहिधर्मान्सुखोपायान्मद्विधानांसुखावहान् १ भीष्मउ॰ ब्राह्मणस्यतुचत्वारस्त्वा
श्रमाविहिताःप्रभो वर्णास्तान्नानुवर्तंतेत्रयोभरतसत्तम २ उक्तानिकर्माणिबहूनिराजन्स्वर्ग्या
णिराजन्यपरायणानि नेमानिदृष्टांतविधौस्मृतानिक्षात्रेहिसर्वंविहितंयथावत्
३ क्षात्राणिवैश्यानिचसेवमानःशौद्राणिकर्माणिचब्राह्मणःसन् अस्मिँल्लोकेनिंदितोमंदचेताः
परेचलोकेनिरयंप्रयाति ४ यासंज्ञाविहितालोकेदासेश्वनिकुलेपशौ विकर्माणस्थितेविप्रे
सैवसंज्ञाचपांडव ५ ॥

स्वधर्मोदृष्टोयस्तुमर्हतीति त्रयोहिंसापराःवर्णास्तान्नानुवर्तंतइत्येतत्प्रपंचयतिउक्तानीत्यादिना राजन्यानांपरायणानिसुखजयादीनि
दृष्टांतविधौत्वयाएषस्यप्रतिवचने नयोग्यानि यतःक्षात्रेविहितंविधिप्रधानंप्रवृत्तिशास्त्रमितियावत् तत्कथंनिवृत्तिप्रधानेब्राह्म
णधर्मेःसमत्वमेतीत्यर्थः ४ ५ ॥

श्री॰
शां॰प॰
टी॰
१२२

षट्कर्माणि प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिरिति इज्यादीनामाश्रमांतरेषु योगात्सर्वाश्रमयोग्यान्येतान्येव ष
ट्कर्माणि सर्वधर्मः अहिंसा संवृत्तस्याचपलस्य हतात्मनः जितचित्तस्य ६ तपसि विचारे अक्षरसंमिताः अक्षयाः ७ नन्वेवं ब्रा
ह्मणः स्वधर्मं त्यक्त्वा किमिति हीनधर्मे वर्त्तत इत्याशंक्याह य इति यः पुमान् यस्मिन्नवस्थाविशेषे यत्र देशे काले वा येन फलेन निमित्ते
न यत्कर्म करोति साधु असाधु वा न तत्सफलं लोभाच्चिराभ्यासाच्च स गुणमेवेति प्रतिपद्यते न त्विदं निंद्यमिति ततो विरज्यत इत्यर्थः ८ ता

षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि सर्वधर्मोपपन्नस्य संवृत्तस्य हतात्मनः ६ ब्राह्मणस्य विशु
द्धस्य तपस्यभिरतस्य च निराशिषो वदान्यस्य लोका ह्यक्षरसंमिताः ७ यो यस्मिन्कुरुते कर्म
यादृशं येन यत्र च तादृशं तादृशेनैव स गुणं प्रतिपद्यते ८ वृध्याकृषिवणिक्त्वेन जीवसंजीवने
न च वेत्तुमर्हसि राजेंद्र स्वाध्यायगणितं महत् ९ कालसंचोदितः कालपर्यायनिश्चितः उत्तमा
धममध्यानि कर्माणि कुरुते वशः ९ ॥

न्येवाह वृध्येति जीवैः संजीवनं स्वगया जीवितं तेन महदपि स्वाध्यायगणितं वेदाभ्यसनं वृध्यादिभिः समानमिति वेत्तुमर्हसि उक्तहेतोरित्य
र्थः ९ अभ्यासात्कर्माणि रोचंते चेत् उत्तमान्येव तानि कुतो नाभ्यस्यंत इत्याशंक्याह कालेति कालेन पर्येति आविर्भवंतीति कालपर्या
यः प्राग्भवीयो वासनासमूहः तेन कालेन प्रेरितस्तदनुगुणं कर्म करोति यतः अवशः कालाधीनः ९ ॥

एवंचेत्कृतंविधिनिषेधाभ्यामित्यतआह अंतवंतीति पुराश्रेयस्कराणिप्राचीनानिदेहारंभकाणिनानिअंतवंतिदेहस्यैवअंतवत्त्वा
त् देहसंबंधियत्सुखदुःखादिपवर्गमनंतंतदपरिहार्यं अत्यत्रतुशुभाशुभप्रवृत्त्यादौलोकःस्वकर्मनिरतःस्वस्यअभीष्टयत् कर्मणागा
दिविषयभूतंतत्रैवनिरतःतत्रयतःसर्वतोमुखःप्रवृत्तोवास्वतंत्रःअतएवजीवःतत्रतत्रकामकारेणप्रवर्त्ततेतोविधिनिषेधशास्त्रस्यात्यैवा

अंतवंतिप्रधानानिपुराश्रेयस्कराणिच स्वकर्मनिरतोलोकोह्यन्तरःसर्वतोमुखः ११ इतिश्रीम
हाभारतेशांतिपर्वणि ६२ भीष्मउ० ज्याकर्षणंशत्रुनिबर्हणंचकृषिर्वणिज्यापशुपालनंच शु
श्रूषणंचापितथार्थहेतोरकार्यमेतत्परमंद्विजस्य १ सेव्यंतुब्रह्मषट्कर्मगृहस्थेनमनीषिणा कृ
तकृत्यस्यचारण्येवासोविप्रस्यशस्यते २ राजप्रेष्यंकृषिधनंजीवनंचवणिक्पथा कौटिल्यंकौ
लटेयंचकुसीदंचविवर्जयेत् ३ शूद्रोराजन्भवतिब्रह्मबंधुर्दुश्चारित्रोयश्चधर्मादपेतः वृषलीपतिः
पिशुनोनर्तनश्चग्रामप्रेष्योयश्चभवेद्विकर्मा ४ जपन्वेदानजपंश्चापिराजन्समःशूद्रैर्दासवच्चापि
भोज्यः एतेसर्वेशूद्रसमाभवंतिराजन्नेतान्वर्जयेद्देवकृत्ये ५ ॥

र्थवत्त्वमित्यर्थः ११ द्विषघ्नितमः ज्याकर्ष १ २ कौटिल्यमनार्जवंकौलटेयंकुलटाप्रधानंजारकर्मपारदार्यंवा अन्येतुकौटलेयमिति
पाठंप्रकल्प्यमात्सर्यमितिव्याचक्षते कुसीदंवृद्धिजीविकां ३ ४ राजप्रेष्यादिःवेदानजपनअजपन्वाशूद्रःपंक्तेर्बहिर्भोजनीयएवे
तिभावः ५ ॥

श्री० शां० रा० टी० १२३

९ धर्मेष्वसक्तान्विष्णुर्नेच्छतिचेत्काहानिरतआह लोकइति लोकेस्वर्गे इदंब्राह्मणादिआश्रमस्थाश्चस्वधर्मेनतिष्ठेयुः स्वर्गादिकंसर्वं
विष्णुप्रसादादेवतदभावेसर्वंकृतंकर्मव्यर्थमितिभावः १० योराजात्रयाणांब्राह्मणवैश्यशूद्राणांस्वराज्येआश्रमधर्मसेवनंयथोक्तंइ

निर्मर्यादेचाशुचौक्रूरवृत्तौहिंसात्मकेत्यक्तधर्मस्ववृत्ते हव्यकव्यानिचान्यानिराजन्देयान्यदेया
निभवंतिचास्मै ६ तस्माद्धर्मोविहितोब्राह्मणस्यदमः शौचमार्जवंचापिराजन् तथाविप्रस्याश्र
माः सर्वएवपुराराजन्ब्रह्मणावैविसृष्टाः ७ यः स्याद्दांतः सोमपश्चार्यशीलः सानुक्रोशः सर्वसहो
निराशी ऋजुर्मृदुरनृशंसः क्षमावान्सवैविप्रोनेतरः पापकर्मा ८ शूद्रंवैश्यंराजपुत्रंचराजन्लो
काः सर्वेसंश्रिताधर्मेसंश्रिताधर्मकामाः तस्माद्वर्णान्शांतिधर्मेष्वसक्तान्मत्वाविष्णुर्नेच्छतिपांडु
पुत्र ९ लोकेचेदंसर्वलोकस्यनस्याच्चातुर्वर्ण्यंवेदवादाश्चनस्युः सर्वाश्चेज्याः सर्वलोकक्रियाश्च
सद्यः सर्वेचाश्रमस्थानवैस्युः १० यश्चत्रयाणांवर्णानामिच्छेदाश्रमसेवनं चातुराश्रम्यदृष्टांश्च
धर्मांस्तान्शृणुपांडव ११ शुश्रूषोः कृतकार्यस्यकृतसंतानकर्मणः अभ्यनुज्ञातराजस्यशू
द्रस्यजगतीपते १२ ॥

च्छेत्तत्तेनावश्यंज्ञातव्यानधर्मान्शृणु ११ शुश्रूषोः वेदांतेषुअनधिकारात्पुराणश्रवणाद्यात्मानंश्रोतुमिच्छोः कृतकार्यस्ययावज्जी
वस्तामसर्थ्यसेवितत्रैवर्ण्यस्यजातपुत्रस्यअभ्यनुज्ञातोराज्ञाइत्यभ्यनुज्ञातराजस्तस्य १२ ॥

अत्यंतरगतस्य आचारनिष्पात्रैवर्णिकसमस्य दर्शधर्मगतस्येति मत्तप्रमत्तादीन्प्रकृत्य दशधर्मं न जानंतीत्युक्तेस्त्रयोगाधर्मानभिज्ञ
स्य ग्रहणं तस्यापि आश्रमाः सर्वे विहिताः शूद्रोपि नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं वा सकलविक्षेपककर्मत्यागरूपं संन्यासं वाऽनुतिष्ठेदेव नि

अत्यंतरगतस्यापि दर्शधर्मगतस्य वा आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषं १३ भैक्ष्यचर्या
ततः प्राङ्क्तस्य तद्धर्मचारिणः यथा वैश्यस्य राजेंद्र राजपुत्रस्य चैव हि १४ कृतकृत्यो वयोतीतो रा
ज्ञः कृतपरिश्रमः वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयं १५ वेदानधीत्य धर्मेण राजशास्त्राणि
चानघ संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च १६ पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च १७ आनयित्वा यथापाठं विप्रेभ्यो दत्तदक्षिणः सं
ग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु १८ स्थापयित्वा प्रजापालं पुत्रं राज्ये च पांडव अन्यगोत्रं प्र
शस्तं वा क्षत्रियं क्षत्रियर्षभ १९ अर्चयित्वा पितॄन्सम्यक्पितृयज्ञैर्यथाविधि देवान्यज्ञैर्ऋषीन्वे
दैरर्चयित्वा तु यत्नतः २० अंतकाले च संप्राप्ते य इच्छेदाश्रमांतरं सोनुपूर्व्याश्रमान्राजन्गत्वा सिद्धि
मवाप्नुयात् २१ ॥

राशिषं शांतिदांत्यादिकल्याणगुणरहितं १३ भैक्ष्यचर्या पारिव्राज्यं तस्य शूद्रस्य तद्धर्मचारिणः तान्पूर्वोक्तान्स्वधर्मानाचरतीति तथाभूतस्य त
था वैश्यस्य पुत्रस्य च भैक्ष्यचर्या प्राङ्विप्रान्वयः १४ १५ १६ १७ १८ १९ २० २१ ॥

श्री॰
शा॰ रा
टी॰
१२५

राजाऋषित्वेनमंत्रार्थद्रष्टृत्वेनवेदांतश्रवणकर्तृत्वेनदेवत्वेनभैक्षचर्यामिच्छेदितिपूर्वेणसंबंधः नत्वेवयाश्रवणमकुर्वन्नन्नमात्रार्थमित्य
र्थमित्यर्थः तत्कुर्वंस्तुजीवितकांक्षयाभैक्षचर्यांचरेदेवेत्यर्थः २२ यततभैक्षंनैष्ठिकंतित्यंत्रयाणांराजादीनि तेषामाश्रमसंन्यासोनित्यो

राजर्षित्वेनराजेंद्रभैक्ष्यचर्यांनसेवया अपेतगृहधर्मोपिचरेज्जीवितकाम्यया २२ नचैतन्नैष्ठिकंधर्मं
त्रयाणांभूरिदक्षिण चतुर्णांराजशार्दूलप्राहुराश्रमवासिनां २३ बह्वायत्तंक्षत्रियैर्मानवानांलो
कश्रेष्ठंधर्ममासेवमानैः सर्वेधर्माःसोपधर्मास्त्रियाणांराज्ञोधर्मादितिवेदाच्छृणोमि २४ यथा
राजन्हस्तिपदेपदानिसंलीयंतेसर्वसत्वोद्भवानि एवंधर्मान्राजधर्मेषुसर्वान्सर्वावस्थंसंप्रलीना
न्निबोध २५ अल्पाश्रयानल्पफलान्वदंतिधर्मानन्यान्धर्मविदोमनुष्याः महाश्रयंबहुकल्या
णरूपंक्षात्रंधर्मंनेतरंप्राहुरार्याः २६ सर्वेधर्माराजधर्मप्रधानाःसर्ववर्णाःपाल्यमानाभवंति स
र्वस्त्यागोराजधर्मेषुराजंस्त्यागंधर्मंचाहुरग्र्यंपुराणं २७ मज्जेत्त्रयीदंडनीतौहतायांसर्वेधर्माःप्र
क्षयेयुर्विवृद्धाः सर्वेधर्माश्चाश्रमाणांहताःस्युःक्षात्रेत्यक्तेराजधर्मेपुराणे २८ सर्वेत्यागाराज
धर्मेषुदृष्टाःसर्वादीक्षाराजधर्मेषुचोक्ताः सर्वाविद्याराजधर्मेषुयुक्ताःसर्वेलोकाराजधर्मेप्रविष्टाः

= ५

नास्तित्रयपित्वविदेषककर्मत्यागरूपःकाम्यपवास्तीत्यर्थः सचचतुर्णामप्याश्रमाणामस्तीतिप्राहुः २३ राजधर्मंप्रशंसति वा
कायतमित्यादिना २४ २७ सर्वेषांत्यागिनांषड्भागहारीराजापिसर्वत्यागीभवतीत्यर्थः २८ २९ ॥

१२५

यथेति जीवाः मृगादयः प्राकृतैर्नीचैः बध्यमानाः हंतॄणां धर्मस्य कृतहस्तादीनां च नाशाय भवंति एवं राजधर्मैर्नीत्यादिभिर्वियुक्ताः
धर्मा अग्निहोत्रादयः चौरैर्नाश्यमानाः कर्तॄणां धर्मं चितं च बोधयंति कर्त्ता स्वस्य संचिन्वतः स्वास्थ्यमन्वेषयंतो व्याकुलतया स्वधर्मं नाद्रियं
ते तस्माद्राजधर्म एव श्रेयान्धर्मेष्वित्यर्थः ३१ इति षष्टित्रितमः ६३ चातुरा १ २ धर्मं बहुद्वारं विद्धि अन्येतत्तज्ज्ञा वेदधर्मस्य स्वरूपं को

यथा जीवाः प्राकृतैर्बध्यमाना धर्मश्रुतानामुपपीडनाय एवं धर्मा राजधर्मैर्वियुक्ताः संचिन्वंतो
नाद्रियंते स्वधर्मं ३१ इति श्रीमहाभारते शांतिपर्वणि राजधर्मे ६३ भीष्म उ० चातुराश्रमधर्मा
श्च यतिधर्माश्च पांडव लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः १ सर्वाण्येतानि कर्माणि क्षा
त्रे भरतसत्तम निराशिषो जीवलोकाः क्षात्रधर्मे व्यवस्थिते २ अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवा
सिनां प्रकोपयंति तद्भावमागमैरेव शाश्वतं ३ अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयं अनि
श्चयज्ञा धर्माणामदृष्टांते परे हताः ४ प्रत्यक्षसुखभूयिष्ठमात्मसाक्षिकमच्छलं सर्वलोकहि
तं धर्मं क्षत्रियेषु प्रतिष्ठितं ५ धर्माश्रमेष्व्यवसितां ब्राह्मणानां युधिष्ठिर यथा त्रयाणां वर्णा

पश्यंति विरुद्धागमैः ३ अदृष्टांते न दृष्टोऽंतो यस्य तस्मिन्परे धर्मे हताः नष्टधियः निश्चयं प्रकोपयं नां संख्यातोपश्रुतिः पुरा
ति ४ ५ धर्माश्रमे गार्हस्थ्ये त्रयाणां वर्णानां धर्माणामुपश्रुतिरंतर्भावः संख्याता प्रकटा तथा व्यवसितानां नैष्ठिकवानप्रस्थयतीनां ब्रा
ह्मणानां च धर्माणामुपश्रुतिः संख्याता तथा राजधर्मैः सह लोकाः श्रेतभूतो इति सार्द्धश्लोकः ६ ॥

श्री॰ शां॰ रा॰ टी॰ १२५

अत्रपूर्वोक्तांकथांस्मारयतिउदाहृतमितिसार्द्धं ७ ८ आश्रमेआश्रमविहितं कर्मधर्मंतुलयित्वाकिंदंडनीतिजोधर्मोमहा

राजधर्मेष्वनुमतालोकाःसुचरितैःसह उदाहृतंतेराजेंद्रयथाविष्णुंमहौजसं ७ सर्वभूतेश्वरं

देवंप्रभुंनारायणंपुरा जग्मुःसुबहुशःशूराराजानोदंडनीतये ८ एकैकमात्मनःकर्मतुलयि

त्वाश्रमेपुरा राजानःपर्युपासंतेदृष्टांतवचनेस्थिताः ९ साध्यादेवावसवश्चाश्विनौचरुद्राश्चा

विश्वेमरुतांगणाश्च सृष्टाःपुराद्यादिदेवेनदेवाःक्षात्रेधर्मेवर्त्तयंतेचसिद्धाः १० अत्रतेवर्त्तयिष्या

मिधर्ममर्थविनिश्चयं निर्मर्यादेवर्त्तमानेदानवैकार्णवेपुरा ११ बभूवराजाराजेंद्रमांधातानाना

मवीर्यवान् पुरावसुमतीपालोयज्ञंचक्रेदिदृक्षया १२ अनादिमध्यनिधनंदेवंनारायणंप्र

भुं सराजाराजशार्दूलमांधातापरमेश्वरं १३ जगामशिरसापादेयज्ञेविष्णोर्महात्मनः द

र्शयामासतंविष्णूरूपमास्थायवासवं १४ सपार्थिवैर्वृतःसद्भिरर्चयामासतंप्रभुं तस्यपा

र्थिवसिंहस्यतस्यचैवमहात्मनः संवादोयंमहानासीत्विष्णुंप्रतिमहाद्युते १५ इंद्रउ॰ कि

मिष्यतेधर्मभृतांवरिष्ठयद्द्रष्टुकामोसिमप्रमेयं अनंतमायामितमंत्रवीर्यंनारायणं

ह्यादिदेवंपुराणं १६ नासौदेवोविश्वरूपोमयापिशक्योद्रष्टुंब्रह्मणावापिसाक्षात् येन्येका

अर्थस्यनिश्चयोयत्रतं ११ १२ १३ वासवंपंद्र ... दृष्टांतवचनेसिद्धांतेस्थितंप्रभुंउपासंतेइतियोजना ९ १०

नुउन्नआश्रमधर्मइतिसंदिह्यदृष्टांतवचनेसिद्धांतेश्रोतंप्रभुंउपासंतेइतियोजना

१८ त्वाहंत्वामहं १९ तंतात्राद्धर्मान्नश्रेष्टंकर्त्तुंनजानामि २० नसंतिसैनिकाः अराजानःधर्मविषयेपरांगतिंकांष्टाननयंते
नप्रापयंतिअन्यंस्वयंचनव्रजंति राजानस्तुप्रयुक्तैर्धर्मैरदृयमपिकुर्वंति अयुक्तमितिपाठेहिअसिद्धंयुक्तंअमितिविशूल्पंयथास्या

समेस्थितोधर्मपरोजितेंद्रियःशूरोहंप्रीतिरतःसुराणां बुद्ध्याभक्त्याचोत्तमःश्रद्धयाचततस्तेहं
दमिवरान्यथेष्टं १८ मांधातोउ० असंशयंभगवन्नादिदेवंद्रक्ष्यामित्वाहंशिवसाप्रसाद्य त्यक्त्वा
कामान्धर्मकामोहरण्यमिच्छेगंतुंसत्पथंलोकहष्टं १९ क्षात्राद्धर्माद्विपुलादप्रमेयात्लोकाःप्रा
प्ताःस्थापितंस्वंयशश्च धर्मोयोसावादिदेवात्प्रवृत्तोलोकश्रेष्टंतनजानामिकर्त्तुं २० इंद्रउवाच अ
सैनिकाधर्मपराश्चधर्मपरांगतिंनव्रजंतेह्ययुक्तं क्षात्रोधर्मोह्यादिदेवात्प्रवृत्तःपश्चादन्येशेषभू
ताश्चधर्माः २१ शेषाःसृष्टाह्यनंतवंतोह्यनंताःसप्रस्थानाःक्षत्रधर्माविशिष्टाः अस्मिन्धर्मेसर्व
धर्माःप्रविष्टास्तस्माद्धर्मंश्रेष्टमिमंवदंति २२ कर्मणावैपुरादेवाऋषयश्चामितौजसः त्राताः
सर्वेप्रसह्यारीन्क्षत्रधर्मेणविष्णुना २३ यदिह्यसौभगवान्नाहनिष्यद्रिपून्सर्वान्सुरानप्रमेयः
नब्राह्मणानचलोकादिकर्त्तानसद्धर्मानादिधर्माभविष्यन् २४ इमामुर्वीनाजयद्विक्रमेणदेवः
श्रेष्टःसासुरामादिदेवः चातुर्वर्ण्यंचातुराश्रम्यधर्माःसर्वेनस्युर्ब्राह्मणानांविनाशात् २५ ॥

नयाहेलयैवनयंतेइत्यर्थः शेषभूताःअंगभूताः २१ सप्रस्थानाःपरिव्राज्यसहिताः शेषाःधर्माअंतवत्फलाःसंख्याताःअनंताः

२२ कर्मणात्विषया २३ ग्रंथलाकंस्त्राद्विर्ययम २४ २५ ॥

श्री॰
शां॰रा॰
टी॰
१२६

२६ आत्मत्यागोयुद्धेमरणं २७ २९ अक्षरपर्यंतंमोक्षावसानं ३० चतुःषष्टितमः पर्व १ भूसंस्कारंभुवःसंपन्नसस्यत्वं राजसं

नष्टाधर्माःशतधाशाश्वतास्तेक्षात्रेणधर्मेणपुनःप्रवृद्धाः युगेयुगेह्यादिधर्माःप्रवृत्तालोकज्येष्ठं
क्षात्रधर्मंवदंति आत्मत्यागःसर्वभूतानुकंपालोकज्ञानंपालनंमोक्षणंच विषण्णानांमोक्षणंपी
डितानांक्षात्रेधर्मेविद्यतेपार्थिवानां २७ निर्मर्यादाःकाममन्युप्रवृत्ताभीताराज्ञोनाधिगच्छंतिपा
पं शिष्टाश्चान्येसर्वधर्मोपपन्नाःसाध्वाचाराःसाधुधर्मंवदंति २८ पुत्रवत्पाल्यमानानिराजधर्मेण
पार्थिवैः लोकेभूतानिसर्वाणिविचरंतेनात्रसंशयः २९ सर्वधर्मपरंक्षात्रंलोकश्रेष्ठंसनातनं शा
श्वदक्षरपर्यंतमक्षरंसर्वतोमुखं ३० इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मे ६४ इंद्रउवाच ए
वंवीर्यःसर्वधर्मोपपन्नःक्षात्रःश्रेष्ठःसर्वधर्मेषुधर्मः पाल्योयुष्माभिर्लोकहितैरुदारैर्विपर्ययेस्या
दभावःप्रजानां १ भूसंस्कारंराजसंस्कारयोगमभैक्षचर्यांपालनंचप्रजानां विद्याद्राजासर्वभूता
नुकंपीदेहत्यागंचाहवेधर्ममग्र्यं २ त्यागंश्रेष्ठंमुनयोवैवदंतिसर्वश्रेष्ठंयच्छरीरंत्यजेत नित्यं
युक्ताराजधर्मेषुसर्वेप्रत्यक्षंतेभूमिपालायथैव ३ बहुश्रुत्यागुरुशुश्रूषयाचपरस्परात्संहननाद्व
दंति नित्यंधर्मंक्षत्रियोब्रह्मचारीचरेदेकोह्याश्रमंधर्मकामः ४ ॥

स्कारोराजसूयाश्वमेधावभृथस्नानं अभैक्ष्यचर्यासंन्यासोराज्ञामधर्मस्तूक्तं २ यथैवशरीराणित्यक्तवंतः ३ ४ ॥

श्रेयसेः पौरुषैः ५ येनत्वात्रधर्मेण अन्यथार्थास्तांस्तान्धर्मान्वदंति ६ ७ यागतिर्यत्तादिः आश्रमधर्मश्च एततद्वयं ८ ९ १० नो

सामान्यार्थव्यवहारेप्रवृत्ते प्रियेवर्जयन्नेवयत्नात् चातुर्वर्ण्यस्थापनात्पालनाच्चतैस्तैर्योगैर्निय
मैरौरसैश्च ५ सर्वोद्योगैराश्रमंधर्ममाहुः क्षात्रंश्रेष्ठंसर्वधर्मोपपन्नं स्वंस्वंधर्मंयेनचरंतिवर्णास्तां
स्तान्धर्मानन्यथार्थान्वदंति ६ निर्मर्यादानित्यमर्थेविनष्टानाहुस्तान्वैपशुभूतान्मनुष्यान्
यथानीतिंगमयत्यर्थयोगाच्छ्रेयस्तस्मादाश्रमात्क्षत्रधर्मः ७ त्रैविद्यानांयागतिर्ब्राह्मणानां
यश्चैवोक्तस्त्वाश्रमोब्राह्मणानाम् एतत्कर्मब्राह्मणस्याहुरग्र्यमन्यत्कुर्वंछूद्रवच्छस्त्रवध्यः
८ चातुराश्रम्यधर्माश्चवेदधर्माश्चपार्थिव ब्राह्मणेनानुगंतव्यानान्योविद्यात्कदाचन ९ अ
न्यथावर्तमानस्यनासावृत्तिःप्रकल्प्यते कर्मणावर्द्धतेधर्मोयथाधर्मस्तथैवसः १० योविकर्म
स्थितोविप्रोनससन्मानमर्हति कर्मस्वनोपयुंजानमविश्वास्यंहितंविदुः ११ एतेधर्माःसर्वव
र्णेषुदृष्टाउत्क्रष्टव्याःक्षत्रियेणेहधर्माः तस्माज्ज्येष्ठाराजधर्मानचान्येवीरज्येष्ठावीरधर्मामता
मे १२ मांधातोवाच यवनाःकिरातागांधाराश्चीनाःशबरबर्बराः शकास्तुषाराःकंका
श्चपह्लवाश्चांध्रमद्रकाः १३ पौंड्राःपुलिंदारमठाःकांबोजाश्चैवसर्वशः ब्रह्मक्षत्रप्रसूताश्चवै

पर्युंजानंनाचरंतं ११ उत्क्रष्टव्याः उत्कर्षंप्रापणीयाः एवधर्मःक्षत्रियस्य १२ १३ १४ ॥ श्याःशूद्राश्चमानवाः १४

दस्युजीविनःदस्युवृत्तिजीविनः १५ एतदिति संस्कारजानांचोराणांचकथंधर्मस्थापनंकर्त्तव्यमितिप्रश्नार्थः १६ तेषामपिमात्रा

कथंधर्मंचरिष्यन्तिसर्वेविषयवासिनः मद्विधैश्चकथंस्थाप्याःसर्वेवैदस्युजीविनः १५ एतदि
च्छाम्यहंश्रोतुंभगवंस्तद्ब्रवीहिमे त्वंबंधुभूतोह्यस्माकंक्षत्रियाणांसुरेश्वर १६ इंद्रउवाच मा
तापित्रोर्हिशुश्रूषाकर्त्तव्यासर्वदस्युभिः आचार्यगुरुशुश्रूषातथैवाश्रमवासिनां १७ भूमिपानांच
शुश्रूषाकर्त्तव्यासर्वदस्युभिः वेदधर्मक्रियाश्चैवतेषांधर्मोविधीयते १८ पितृयज्ञास्तथाकूपाः
प्रपाश्चशयनानिच दानानिचयथाकालंद्विजेभ्योविसृजेत्सदा १९ अहिंसासत्यमक्रोधोवृ
त्तिदायानुपालनं भरणंपुत्रदाराणांशौचमद्रोहएवच २० दक्षिणासर्वयज्ञानांदातव्याभूति
मिच्छता पाकयज्ञामहार्हाश्चदातव्याःसर्वदस्युभिः २१ एतान्येवंप्रकाराणिविहितानिपुरानघ
सर्वलोकस्यकर्माणिकर्त्तव्यानीहपार्थिव २२ मांधातोवाच दृश्यंतेमानुषेलोकेसर्ववर्णेषुदस्य
वः लिंगांतरेवर्त्तमानाआश्रमेषुचतुर्ष्वपि २३ इंद्रउवाच विनष्टायांदंडनीत्यांराजधर्मेनिराकृते
संप्रमुह्यंतिभूतानिराजदौरात्म्यतोनघ २४ असंख्याताभविष्यंतिभिक्षवोलिंगिनस्तथा आश्रमा
णांविकल्पाश्चनिवृत्तेस्मिन्कृतेयुगे २५ ॥

दिशुश्रूषानृपधर्मस्थापनंकर्त्तव्यमित्याहमातेति १७ १८ १९ २० महा
र्हा इतिपाकयज्ञमुद्दिश्यब्राह्मणाययत्नेनदेयंएवंश्राद्धमपिआमेनहिरण्येनचेतित्रयं २१ २२ २३ २४ २५ ॥

२६ पापःपापादितिशेषः २७ २८ ३० गतिंफलंआस्तिकत्वात्समेमान्यः ३१ ३३ अन्यायेनतत्रधर्मोवर्त्तया ३४ चक्रेधात्राप्रवर्तिते
आदिपरायणेपूर्वेषांशरणभूतेवर्त्तस्वतेत्वांसंविजानामिसम्यक्समर्थोसीतिजानामि ३५ इतिश्रीमहाभारतेशांतिपंचषष्टितमः

श्रेष्ठएवानाःपुराणानांधर्माणांपरमागतीः अन्यथंप्रतिपद्यंतेकाममन्युसमीरिताः २६ यदा
निवर्त्यतेपापोदंडनीत्यामहात्मभिः तदाधर्मोनचलतेसद्भूतःशाश्वतःपरः २७ सर्वलोकगुरुंचै
वराजानंयोवमन्यते नतस्यदत्तंनहुतंनश्राद्धंफलतेक्वचित् २८ मानुषाणामधिपतिंदेवभूतंसना
तनं देवापिनावमन्यंतेधर्मकामंनरेश्वरं २९ प्रजापतिर्हिभगवान्सर्वंचैवासृजज्जगत् सप्रवृत्ति
निवृत्त्यर्थंधर्माणांक्षत्रमिच्छति ३० प्रवृत्तस्यहिधर्मस्यबुद्ध्यायःस्मरतेगतिं समेमान्यश्चपूज्यश्च
तत्रक्षत्रंप्रतिष्ठितं ३१ भीष्मउ० एवमुक्त्वासभगवान्मरुद्गणवृतःप्रभुः जगामभवनंविष्णोरक्षरंशा
श्वतंपदं ३२ एवंप्रवर्तितेधर्मेपुरासुचरितेनघ कःक्षत्रमवमन्येतचेतनावान्बहुश्रुतः ३३ अन्या
येनप्रवृत्तानिनिवृत्तानितथैवच अंतराविलयंयातियथापथिविचक्षुषः ३४ आदौप्रवर्तितेच
क्रेतथैवादिपरायणे वर्तस्वपुरुषव्याघ्रसंविजानामितेनघ ३५ इतिशांतौराजधर्मेषु ६५ यु
धिष्ठिरउ० श्रुतामेकथिताःपूर्वंचत्वारोमानवाश्रमाः व्याख्यानयित्वाख्यानमेतदाचक्ष्वपृच्छ

६५ श्रुताः मानवस्यमनुष्यमात्रस्यआश्रमाःचत्वारइतिश्रुतंततःकथंदस्युनामप्युत्तमाश्रमयोगः एषांआश्रमाणांव्या नः १॥
ख्यानंस्पष्टीकरणंआख्यानयित्वाविस्तारंनीत्वाआचक्ष्व आख्यानयित्वेतिनामधातुपदं १ ॥

यथाममविदितास्तथातवविदिताइत्यन्वयः २ लिंगस्यसूक्ष्मस्याभ्यन्तरंकारणंहार्दाकाशंतद्गतंसर्वज्ञमित्यर्थः ३ एतानिचा
तुराश्रम्यकर्मणांलिंगानिसन्ताराज्ञाराजधर्मेष्वेववर्त्तंतेइत्यर्थः ४ अन्वयोयस्याश्रमस्यसाधारणोधर्मःसयत्रक्वचिदाश्रमेया
स्यांकस्यांचिज्जातोदृष्टश्चेत्ततस्तदाश्रमधर्मप्राप्यंस्थानमाप्नोतीतिनतुउत्तमपदप्राप्तौजातिराश्रमोवाकारणमित्यध्यायार्थस्तमाह

भीष्मउवाच विदिताःसर्वएवेहधर्मास्तवयुधिष्ठिर यथाममम‍हा
बाहोविदिताःसाधुसंमताः २ यत्तुलिंगान्तरगतंपृच्छसेमांयुधिष्ठि
र धर्मंधर्मभृतांश्रेष्ठतन्निबोधनराधिप ३ सर्वाण्येतानिकौंतेयवि
द्यंतेमनुजर्षभ साध्वाचारप्रवृत्तानांचातुराश्रम्यकारिणां ४ अका
मद्वेषयुक्तस्यदंडनीत्यायुधिष्ठिर समदर्शिनश्चभूतेषुभैक्षाश्रमपदंभ
वेत् वेत्तिज्ञानंविसर्गंचनिग्रहानुग्रहंतथा यथोक्तवृत्तेर्धीरस्यक्षे
माश्रमपदंभवेत् ६ ॥

अकामेत्यादिना कामद्वेषराहित्यंसमदर्शित्वंचयत्नेनसाधारणोधर्मस्तद्वान्राजायदिदंडनीत्याभूतेषुवर्त्ततेतर्हितस्ययत् भैक्षाश्रमस्यसंन्या
सिनोयत्पदंब्रह्मलोकप्राप्तिस्तद्भवेत् एवंसर्वत्रज्ञेयं ५ क्षेमाश्रमोगार्हस्थ्यं ६ ॥

भैक्षाश्रमो ब्रह्मचर्यं ७ दीक्षाश्रमो वैखानसः ८ ११ परराष्ट्राणां वनौषधीनामिव शिष्टसंरक्षणार्थं कुर्वन् वनितल्पः १२ दीक्षाबद्धा

अर्हान् पूजयतो नित्यं संविभागेन पांडव सर्वतस्तस्य कौंतेय भैक्ष्याश्रमपदं भवेत् ७ ज्ञातिसंबंधि
मित्राणि व्यापन्नानि युधिष्ठिर समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ८ लोकमुख्येषु सत्कारा
लिंगमुख्येषु चासकृत् कुर्वतस्तस्य कौंतेय वन्याश्रमपदं भवेत् ९ आह्निकं पितृयज्ञांश्च भूतयज्ञा
न्समानुषान् कुर्वतः पार्थ विपुलान् वन्याश्रमपदं भवेत् १० संविभागेन भूतानामतिथीनां तथार्च
नात् देवयज्ञैश्च राजेंद्र वन्याश्रमपदं भवेत् ११ मर्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम कुर्वतः पु
रुषव्याघ्र वन्याश्रमपदं भवेत् १२ पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात् दीक्षाबहुविधा
राजन् सत्याश्रमपदं भवेत् १३ वेदाध्ययननित्यत्वं क्षमाथाचार्यपूजनं अथोपाध्यायशुश्रूषा ब्रह्मा
श्रमपदं भवेत् १४ आह्निकं यजमानस्य देवान् पूजयतः सदा धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत्
१५ सत्यं वा रक्षणं वेति यस्य राज्ञो विनिश्चयः प्राणद्यूतेन तत्तस्य ब्राह्माश्रमपदं भवेत् १६ अजिह्म
मशठं मार्गं वर्त्तमानस्य भारत सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् १७ दानप्रस्थेषु विप्रेषु त्रैविद्येषु
च भारत प्रयच्छतोर्थान् विपुलान् वन्याश्रमपदं भवेत् १८ ॥

विधेति यावत्तां पालनं तावत्तो यज्ञाः कृताः इत्यर्थः सत्याश्रमो ब्रह्मलोकप्रपद आश्रमः संन्यासः १४ १४ १५ १६ १७ १८ ॥

अनुक्रोशं दयां आनृशंस्यं अतिष्ठुरत्वं १९ ३० दशधर्मगतो भीतत्वादिना अत्यन्तं व्याकुलतया धर्माधर्मप्रतिपत्तिशून्योऽपि सोऽश्रमी

सर्वभूतेष्वनुक्रोशं कुर्वतस्तस्य भारत आनृशंस्यप्रवृत्तस्य सर्वावस्थं पदं भवेत् १९ बालवृद्धेषु कौन्तेय सर्वावस्थं युधिष्ठिर अनुक्रोशक्रियापार्थ सर्वावस्थं पदं भवेत् २० बलात्कृतेषु परित्राणं कुरूद्वह शरणागतेषु कौरव्य कुर्वन् गार्हस्थ्यमावसेत् २१ चराचराणां भूतानां रक्षणं चापि सर्वशः यथार्हपूजां च तथा कुर्वन् गार्हस्थ्यमावसेत् २२ ज्येष्ठानुज्येष्ठपत्नीनां भ्रातृणां पुत्रनप्तृणां निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः २३ साधूनामर्चनीयानां पूजा सुविदितात्मना पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् आश्रमस्थानि भूतानि यस्तु वेश्मनि भारत आददीत हि भोज्येन तद्गार्हस्थ्यं युधिष्ठिरः २५ यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयं २६ यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा आश्रमस्थं तमप्याहुर्नरश्रेष्ठ युधिष्ठिर २७ स्थानमानं कुले मानं वयोमानं तथैव च कुर्वन् वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर २८ देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च पालयन् पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् २९ काले विभूतिं भूतानामुपहारांस्तथैव च अर्हयन् पुरुषव्याघ्र साधूनामाश्रमे वसेत् ३० दशधर्मगतस्यापि यो धर्मं प्रत्यवेक्षते सर्वलोकस्य कौन्तेय राजा भवति सोऽश्रमी ३१ ॥

सः आश्रमी सर्वाश्रमफलभागित्यर्थः ३१ ॥

३२ ३६ धर्मइति राजधर्मात्मिकानौः धर्मेऽभिविवस्थिता सत्वमेववीर्यकर्णधारबलंयत्र धर्मसेतुःशास्त्रंसेवघटारकावंध

येधर्मकुशलालोकेधर्मंकुर्वंतिभारत पालितायस्यविषयेधर्मोंशास्तस्यभूपतेः ३१ धर्मारामा
न्धर्मपरान्येनरक्षंतिमानवान् पार्थिवाःपुरुषव्याघ्रतेषांपापंहरंतिते ३२ येचाप्यत्रसहायाः
स्युःपार्थिवानांयुधिष्ठिर तेचैवांशहराःसर्वधर्मपरकृतेनच ३३ सर्वाश्रमपदेप्याहुर्गार्हस्थ्यं
दीप्तनिर्णयं पावनंपुरुषव्याघ्रयंधर्मंपर्युपास्महे ३५ आत्मोपमस्तुभूतेषुयोवैभवतिमानवः
न्यस्तदंडोजितक्रोधःप्रेत्येहलभतेसुखं ३६ धर्मेस्थितासत्ववीर्याधर्मसेतुवटारका त्यागवाता
ध्वगाशीघ्रानौस्तंसंतारयिष्यति ३७ यदानिवृत्तःसर्वस्मात्कामोयोस्यहृदिस्थितः तदाभवति
सत्वस्थस्ततोब्रह्मसमश्नुते ३८ सुप्रसन्नस्तुभावेनयोगेनचनराधिप धर्मंपुरुषशार्दूलप्राप्स्य
तेपालनेरतः ३९ वेदाध्ययनशीलानांविप्राणांसाधुकर्मणां पालनेयत्नमातिष्ठसर्वलोक
स्यचैवह वनेचरंतियेधर्ममाश्रमेषुचभारत रक्षणात्तच्छतगुणंधर्मंप्राप्नोतिपार्थिवः ४१ प
वेतविविधोधर्मःपांडवश्रेष्ठकीर्तितः अनुतिष्ठत्वमेनंवैपूर्वदृष्टंसनातनं ४२ ॥

त्यज्यंत्रत्यागवातेनैव
शीघ्रगा ३७ सत्वस्थःधीसत्वमात्रनिष्टः ३८ भावेनचेतसा योगेनचित्तनिरोधेन ३९ ४१ पूर्वदृष्टमनादिं सनातनंपारंपर्यागतं

= ९

श्री॰
शां॰ रा॰
टी॰
१३॰

अध्यायार्थमुपसंहरति चातुराश्रम्यमिति ५२ षट्षष्टितमः ६५ चातु १ राष्ट्रस्य तात्स्थ्यात् राष्ट्रवासिनो जनस्य कृत्यतमं मुख्यं
कार्यं अनिन्द्रं अराजकं अत एवाबलं २ न व्यवतिष्ठते अन्योन्यं लोकाः धर्मव्यवस्थापनं न कुर्वन्तीत्यर्थः ३ ५ अथेति राज्यार्थी अन्योऽपि

चातुराश्रम्यमेकाग्रं चातुर्वर्ण्यं च पाण्डव धर्मपुरुषशार्दूल प्राप्यमेपालनेरतः ५२ इति श्रीमहाभा-
रते शान्तिपर्वणि राजधर्मेषु चातुराश्रम्यविधिः ६६ युधिष्ठिर उ॰ चातुराश्रम्य उक्तमेव चातुर्वर्ण्यं तथैव
च राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह १ भीष्म उ॰ राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनं अनि-
न्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत २ अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते परस्परं च खादन्ति सर्वथा
धिगराजकं ३ इन्द्रमेव प्रवृणुते यद्राजानमिति श्रुतिः यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ४
नाराजकेषु राष्ट्रेषु वस्तव्यमिति रोचये नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्युत अथ चेदभिवर्तेत रा-
ज्यार्थी बलवत्तरः अराजकानि राष्ट्राणि हतवीर्याणि वा पुनः ६ प्रत्युद्गम्याभिपूज्यः स्यादेतद-
त्र सुमन्त्रितं न हि पापात्पापतरमस्ति किंचिदराजकात् ७ स चेत्समनुपश्येत समग्रं कुशलं भवे-
त् बलवान् हि प्रकुपितः कुर्यान्निःशेषतामपि ८ भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा अ-

कश्चिदायाति तदा स पूज्यः राष्ट्रस्थैः अपूजने दोषमाह नहीति ६ ७ स चेदिति तत्प्रसादप्रकोपाभ्यां कुशले राष्ट्रस्येत्यर्थः ८ ९ ॥

९ ११ धनादेरर्थउपभोगः १२ १३ वाकशूरः निष्टुरभाषी दंडपरुषः उग्रदंडः पारजायिकः परस्त्रीगामी १४ १५ अस्तरवार्त्ती
यदतंत्रप्रणामतेनैनंतत्संतापमर्हति यत्स्वयंनमतेदाहनतत्संतापयंत्यपि १ एतयोपमयावीर
संनमेतबलीयसे इंद्रायसप्रणामतेनमतेयोबलीयसे १ तस्माद्राजेवकर्त्तव्यः सततंभूतिमि
च्छतानय नार्थोनदारार्थस्तेषांयेषामराजकं १२ प्रीयतेहिहरन्यापः परवित्तमराजके य
दास्यउद्धरंत्यन्येतदाराजानमिच्छति १३ पापाह्यपितदातेमंनलभंतेकदाचन एकस्यहिद्वौहि
रतोद्वयोश्चबहवोपरे १४ अदासः क्रियतेदासोह्रियंतेचबलात्स्त्रियः एतस्मात्कारणाद्देवाः प्र
जापालंचक्रिरे १५ राजाचेन्नभवेल्लोकेपृथिव्यांदंडधारकः जलेमत्स्यानिवाभक्ष्यन्दुर्बलं
बलवत्तराः १६ अराजकाःप्रजाःपूर्वविनेशुरितिनःश्रुतं परस्परंभक्षयंतोमत्स्याइवजलेकृ
शान् समेत्यतास्ततश्चक्रुः समयानितिनःश्रुतं १ वाकशूरोदंडपरुषोयश्चस्यात्पारजायि
कः यःपरस्वमथादद्यात्त्याज्यानस्तादृशाइति १ विश्वासार्थंचसर्वेषांवर्णानामविशे
षतः तास्तथासमयंकृत्वासमयेनावतस्थिरे १९ सहितास्तास्तदाजग्मुरसुखार्त्ताः पितामहं
अनीश्वराविनश्यामोभगवन्नीश्वरंदिश २० यंपूजयेमसंभूयपश्चनःप्रतिपालयेत् ततोमनुं
दुःखपीडिताः असुखार्त्ताइतिपाठेसुखैरर्थैश्चहीनाः दिशदेहि २० ताःप्रजाःनाभिननंदनांगीचकार २१ ॥

॥ ४

२२ अधिपंचाशत्पंचाशतमधिकृत्य पंचाशत्पशुलाभे एकं भागं तुभ्यं दास्याम इत्यर्थः तथैव हिरण्यस्यापि २३ विवाहेषूद्य-
तासु कन्यासु शुल्के मौल्यप्रसंगे सति सुरूपां कन्यां तुभ्यं दास्याम इति पूर्वेणान्वयः विवादेषु ततासु चेति प्राचां पाठः इयंमया

मनुरु॰ विभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरं विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा २२
भीष्मउ॰ तमब्रुवन्प्रजा मा भैः कर्त्तॄनेनो गमिष्यति पशूनामधिपंचाशद्धिरण्यस्य तथैव च धा-
न्यस्य दशमं भागं दास्यामः कोशवर्द्धनं कन्याशुल्के चारुरूपां विवाहेषूद्यतासु च २४ मुखेन श-
स्त्रपत्रेण ये मनुष्याः प्रधानतः भवंतं तेऽन्वयास्यंति महेंद्रमिव देवता २५ स त्वं जातबलो राजा दुः-
प्रधर्षः प्रतापवान् सुखे धास्यसि नः सर्वान् कुबेर इव नैरृतान् २६ यं च धर्मं चरिष्यंति प्रजा रा-
ज्ञा सुरक्षिताः चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति २७ तेन धर्मेण महता सुखलब्धेन भा-
वितः पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः २८ विजयाय हि निर्याहि प्रतपन्रश्मिवानि-
व मानं विधम शत्रूणां धर्मो जयतु नः सदा २९ स निर्ययौ महातेजा बलेन महता वृतः महा-
भिजनसंपन्नस्तेजसा प्रज्वलन्निव ३० ॥

क्रयेति विवादविषयासु इति तदर्थः विवादेषूततासु चेति पाठे घूतेनाघूते पणीकृतत्वं २४ मुखेन प्रमुखतः प्रथमसित्यर्थः शास्त्रप-
त्रेणावाहनेन च प्रधानतः श्रेष्ठाः प्रथमार्थे तसि २५ मानं दर्पं विधम नाशय २९ ३० ॥

अपतत्रसिरेत्रासंप्राप्ताः ३१ ३५ पत्रंवाहनं ३६ ३८ संविभागीविभज्यभोक्ता वल्गुशोभनं ३९ समषष्टितमः ६७ किमाहुः

तस्यदृष्ट्वामहत्त्वंतेमहेंद्रस्येवदेवताः अपतत्रसिरेसर्वेस्वधर्मेचदृढव्रतः ३१ ततोमहींपरिययौ
पर्जन्यइववृष्टिमान् शमयन्सर्वतःपापान्स्वकर्मसुचयोजयन् ३२ एवंयेभूतिमिच्छेयुः
पृथिव्यांमानवाःक्वचित् कुर्युराजानमेवाग्रेप्रजानुग्रहकारणात् ३३ नमस्येयुश्चतंभक्त्या
शिष्याइवगुरुंसदा देवाइवचदेवेंद्रंतत्रराजानमंतिके ३४ सत्कृतःस्वजनेनेहपरोपिबहुमन्यते
स्वजनेनत्ववज्ञातंपरेपरिभवंत्युत ३५ राज्ञःपरैःपरिभवःसर्वेषामसुखावहः तस्माच्छत्रंच
पत्रंचवाहनान्याभरणानिच ३६ भोजनान्यथपानानिराज्ञेदद्युर्गृहाणिच आसनानिचशय्या
श्चसर्वोपकरणानिच ३७ गोप्तातस्मात्दुराधर्षःस्मितपूर्वाभिभाषिता आभाषितश्चमधुरंप्र
त्याभाषेतमानवान् ३८ कृतज्ञोदृढभक्तिःस्यात्संविभागीजितेंद्रियः ईक्षितःप्रतिवीक्षेतमृ
दुवल्गुचसुष्ठुच ३९ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मेषु ६७ युधिष्ठिरउ॰ किमा
हुर्दैवतंविप्राराजानंभरतर्षभ मनुष्याणामधिपतिंतन्मेब्रूहिपितामह १ भीष्मउ॰ अत्राप्युदाह
रंतीममितिहासंपुरातनं बृहस्पतिंवसुमनायथापप्रच्छभारत २ राजावसुमनानामकौशल्यो
धीमतांवरः महर्षिंकिलपप्रच्छकृतप्रज्ञंबृहस्पतिं ३ ॥ १ २ ३ ॥

वैनयिकं अभ्युत्थानाभिवादनादिकं दक्षिणादक्षिणो ऽसमीपे भूत्वा प्रदक्षिणीकृत्येत्यर्थः ४ ८ समुदीर्णं त्यक्तमर्यादं समुत्सु-
कं परदाराद्यासक्तं प्रसादयति दंडेन शुद्धं करोति ९ ९ अनुदके अल्पोदके निराक्रंदे दस्युभयरहिते ११ १२ परिग्रहान् गृहादीन्

सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिं दक्षिणानंतरो भूत्वा प्रणम्य विधिपूर्वकं ४ विधिं पप्रच्छ
राज्यस्य सर्वलोकहिते रतः प्रजानां सुखमन्विच्छन् धर्मशीलं बृहस्पतिं ५ वसुमना उ॰ केन भूता-
नि वर्द्धंते क्षयं गच्छंति केन वा कमर्चंतो महाप्राज्ञ सुखमत्ययमाप्नुयुः ६ एवं पृष्टो महाप्राज्ञः कौश-
ल्येनामितौजसा राजसत्कारमव्यग्रं शशंसास्मै बृहस्पतिः ७ बृहस्पतिरुवाच राजमूलो महा-
प्राज्ञ धर्मो लोकस्य लक्ष्यते प्रजा राजभयादेव न खादंति परस्परं ८ राजा ह्येवाखिलं लोकं समुदीर्णः
अंधे तमसि मज्जेयुरपश्यंतः परस्परं ९ यथा ह्यनुदके मत्स्या निराक्रंदे विहंगमाः विहरेयुर्यथाका-
मं विहिंसंतः पुनः पुनः ११ विमथ्यातिक्रमेरंश्च विषह्यापि परस्परं अभावमचिरेणैव गच्छेयुर्नात्र सं-
शयः १२ एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः अंधे तमसि मज्जेयुरगोपाः पशवो यथा १३ ह-
रेयुर्बलवंतोपि दुर्बलानां परिग्रहान् हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् १४ ममेदमिति
लोकेस्मिन्न भवेत्संपरिग्रहः न दारा न च पुत्रः स्यान्न धनं न परिग्रहः १५ ॥ +णां समुत्सुकं प्रसादयति धर्मेण प्रसा [illegible]

व्यायच्छमानान् स्वस्वमर्थं आग्रहेण रक्षमाणान् १४ ममेदमिति न स्यात् अपितु बलवत इदमित्येव स्यात् १५ ॥

विषक्तर्वतः लोपः अर्थानांलुंपनं १५ १९ अंताः म्लपवः दस्युसमातचोरायीनः २० योनिदोषः व्यभिचारे विगानं २१ २२ संप्रवर्त्ते

विषयलोपः प्रवर्त्तेतयदिराजानपालयेत् १५ यानेवस्त्रमलंकारान् रत्नानिविविधानिच हेम्रा
यः म्हस्मापापायदिराजानपालयेत् पतेद्धजविर्यंशास्त्रबद्धयायर्मचारिषु अधर्मः प्रगृहीतः।
स्यायदिराजानपालयेत् १७ मातरंपितरंवृद्धमाचार्यमतिथीनगुरुं क्लिश्नीयुरपिहिंस्युर्वायदि
राजानपालयेत् १८ वधवंधपरिक्लेशानित्यमर्थवताभवेत् ममेतवचनविंदेयुर्यदिराजानपाल
येत् १९ अंताश्चाकालपवस्युलोकोयदस्युसाद्भवेत् पतेयुर्नरकेघोरंयदिराजानपालयेत् २०
नयोनिदोषोवर्त्ततनकृषिर्नवणिक्पथः मज्जेद्धर्मस्त्रयीनस्यायदिराजानपालयेत् २१ नय
ज्ञाः संप्रवर्त्तेयुर्विधिवत्स्वाप्तदक्षिणाः नविवाहाः समाजोवायदिराजानपालयेत् २२ नवृषाः
संप्रवर्त्तेरन्नमध्येरन्गर्गराः गोपाः प्रणाशंगच्छेयुर्यदिराजानपालयेत् २३ त्रस्तमुद्विग्नहृ
दयंहाहाभूतमचेतनं क्षणेनविनशेत्सर्वंयदिराजानपालयेत् २४ नसंवत्सरसत्राणितिष्ठेयु
रकुतोभयाः विधिवद्दक्षिणावंतियदिराजानपालयेत् २५ ब्राह्मणाश्चतुरोवेदान्नाधीयीरंस्त
पस्विनः विद्यास्नाताव्रतस्नातायदिराजानपालयेत् २६ नलभेद्धर्मसंश्लेषंहतविप्रहतोजनः
हृतोहस्येत्दिशंगच्छेद्यदिराजानपालयेत् २७ ॥

स्वतरेतः सिंचेस्वर्गगरोमीनभेदेस्त्रीमंथन्यासितिमेदिनी २३ २७

हस्ताद्धस्तस्यमपि चोरा हरेयुः २८ अनयाः अनायासमिति पाठे अक्लेशं यथा स्यात्तथा प्रवर्तेरन् परदारादिषु २९ विवृत्य उद्घाट्य ३॰
हस्तलाघवं तत्साध्यं ताडनं आक्रुष्टं गालितं वा कुतो न सहते अपितु अनायकत्वात्सहत एव गां पृथ्वीं ३१ ३२ अपुरुषाः अरक्षि

हस्ताद्धस्तं परिमुषेद्भिद्येरन्सर्वसेतवः भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् २८ अनयाः संप्र
वर्तेरन्भवेद्वै वर्णसंकरः दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् २९ विवृत्य हि यथाकामं गृहद्वा
राणि शेरते मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ३॰ नाक्रुष्टं सहते कश्चित्कुतो वा हस्तलाघवं
यदि राजा न सम्यग्गां रक्षयत्यपि धार्मिकः ३१ स्त्रियश्चापुरुषा मार्गं सर्वालंकारभूषिताः निर्भयाः
प्रतिपद्यन्ते यदि रक्षति भूमिपः ३२ धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परं अनुगृह्णन्ति चान्योन्यं यदा
रक्षति भूमिपः ३३ यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः युक्ताश्चाधीयते विद्यां यदा रक्षति
भूमिपः ३४ वार्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ३५
यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः महता बलयोगेन तदा लोकः प्रसीदति ३६ यस्याभावे
च भूतानामभावः स्यात्समन्ततः भावे च भावो नित्यं स्यात्कस्तं न प्रतिपूजयेत् ३७ तस्य यो वहते
भारं सर्वलोकाभयावहं तिष्ठन्प्रियहिते राज्ञ उभौ लोकौ विनिर्जयेत् ३८ ॥

ता अपि ३३ ३४ वार्ता जीविका तन्मूलः त्रय्या च वृष्ट्यादिहेतुना धार्यते रक्ष्यते सर्वं त्रयीवार्तादि ३५ ३६ ३७ ३८ ॥

३९ ४१ आसीदतः समीपस्थान् मिथ्योपचरितो वंचितः ४२ ४९ कृष्णगतिः अग्निः अभिपन्नस्य तिरस्कृतस्य ५० ॥

यस्तस्य पुरुषः पापं मनसाप्यनुचिंतयेत् असंशयमिह क्लिष्टः प्रेत्योपि नरकं व्रजेत् ३९ न हि ज्ञात
वमंतव्यो मनुष्य इति भूमिपः महती देवता ह्येषा नररूपेण तिष्ठति ४० कुरुते पंचरूपाणि कालयुक्तानि
यः सदा भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः ४१ यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा मि
थ्योपचरितो राजा तदा भवति पावकः ४२ यदा पश्यति चारेण सर्वभूतानि भूमिपः क्षेमं च कृत्वा व्र
जति तदा भवति भास्करः ४३ अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् सपुत्रपौत्रान् सामात्यां
स्तदा भवति सोंतकः ४४ यदा त्वधार्मिकान् सर्वांस्तीक्ष्णैर्दंडैर्नियच्छति धार्मिकांश्चानुगृह्णाति भ
वत्यथ यमस्तदा ४५ यदा तु धनधाराभिस्तर्पयत्युपकारिणः आच्छिनत्ति च रत्नानि विविधान्यपा
कारिणां ४६ श्रियं ददाति कस्मैचित् कस्माच्चिदपकर्षति तदा वैश्रवणो राजँल्लोके भवति भूमिपः
४७ नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा धर्ममाकांक्षता लोकमीश्वरस्यानसूयता ४८
न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् पुत्रो भ्राता वयस्यो वा यश्च स्यादात्मसमो भवेत् ४९ कु
र्यात्कृष्णगतिः शेषं ज्वलितोनिलसारथिः न तु राजाभिपन्नस्य शेषं क्वचन विद्यते ५० ॥

सर्वाणि रक्ष्याणि रत्नान्यपि वनतरुदर्भमानि यद्वा रत्नानि यानि रक्ष्याण्यपि वरद्रव्याणि ५१ कूटं मारणयंत्रं कूटेः स्त्रीसीरावयवयंत्रयोरि
ति मेदिनी ५२ ५३ राजा रंजकः भोजः सुखानां भोजयिता विविधं राजत इति विराट् श्रीमान् सम्राट् इति राज्ञामपि राजेत्यर्कं ठिते॥

तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् मत्तोऽपि विजुगुप्सेत राजस्वं हरणान्नरः ५१ नस्पृशेदभिगृध्नु
स्सघोमृगः कूटमिव स्पृशन् आत्मस्वमिव रक्षेत राजस्वमिह बुद्धिमान् ५२ महान्तं नरकं घोरमप्रति
ष्ठमचेतनं पतति चिररात्राय राजवित्तापहारिणः ५३ राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ५४ तस्माद्बुभूषुर्नियतो जितात्मा नियतेन्द्रियः मेधावी स्मृ
तिमांस्तत्र संश्रयेत महीपतिं ५५ कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियं धर्मनित्यं स्थितं नीत्यां मंत्रि
णं पूजयेन्नृपः ५६ दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियं शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत्
५७ प्रतापबाल्यं कुरुते मनुं राजा कृशान्वै कुरुते मनुष्यान् राजाभिपन्नस्य कुतः सुखानि राजाभ्युपे
तं सुखिनं करोति ५८ राजा प्रजानां हृदयं गरीयो गतिः प्रतिष्ठा सुखमुत्तमं च समाश्रिता लोकमिमं
परं च जयन्ति सम्यक् पुरुषा नरेन्द्र ५९ नराधिपश्चाप्यनुशिष्य मेदिनीं दमेन सत्येन च सौहृदेन महा

स्मर्थः ५४ बुभूषुर्भवितुमिच्छुः ५५ ५६ निषिद्धजनं अहमेकपदेवं कार्यं करिष्यामि किमनेनेति वादिनं पर्कां गवीरं ५७ ५८ समाश्रिताः या

१९ अप्रवसितमः ९१ एवंराज्ञांमाहात्म्यंश्रुत्वातत्कर्तव्यंपृच्छति पार्थिवेनेति १ भृत्यादीनपिकथंप्रयुंजीतविश्वासयेच्चेतियोज्यं।
२ पार्थिवेनपृथुर्वंश्येनराज्ञा पार्थिवप्रकृतेनवाविजातीयेनापितत्कार्यकारिणा प्रहितेनेतिपाठांतरं ३ आत्माचित्तं ४ पंचवर्गः

सएवमुक्तोंगिरसाकौशल्योराजसत्तमः प्रयत्नात्कृतवान्वीरःप्रजानांपरिपालनं ९१ इति
श्रीमहाभारतेशांतिपर्वणिराजधर्मे ६८ युधिष्ठिरउ० पार्थिवेनविशेषेणकिंकार्यमवशिष्य
ते कथंरक्ष्योजनपदःकथंजेयाश्चशत्रवः १ कथंचारंप्रयुंजीतवर्णान्विश्वासयेत्कथं कथंभृत्या
न्कथंदारान्कथंपुत्रांश्चभारत २ भीष्मउ० राजवृत्तंमहाराजशृणुष्वावहितोखिलं यत्कार्यंपा
र्थिवेनादौपार्थिवप्रकृतेनवा ३ आत्माजेयःसदाराज्ञाततोजेयाश्चशत्रवः अजितात्मानरपति
र्विजयेतकथंरिपून् ४ एतावानात्मविजयःपंचवर्गविनिग्रहः जितेंद्रियोनरपतिर्बाधितुंशक्नु
यादरीन् न्यसेतगुल्मान्दुर्गेषुसंधौचकुरुनंदन नगरोपवनेचैवपुरोद्यानेषुचैवह ६ संस्था
नेषुचसर्वेषुपुरेषुनगरेषुच मध्येचनरशार्दूलतथाराजनिवेशने ७ प्रणिधींश्चततःकुर्याज्जडां
धबधिराकृतीन् पुंसःपरीक्षितान्प्राज्ञान्क्षुत्पिपासाश्रमक्षमान् ८ अमात्येषुचसर्वेषुमित्र
षुविविधेषुच पुत्रेषुचमहाराजप्रणिदध्यात्समाहितः ९ ॥

श्रोत्रादिः ५ गुल्मान्रक्षिणःपतीन् संधौसी।
मांते ६ संस्थानेषुकोष्टपालाद्युपवेशनस्थानेषुमध्येअंतःपुरे ७ प्रणिधीन्चारान् ८ प्रणिदध्यात्गूढचारान्नियुंज्यात् ९ ॥

श्री· शां·रा टी· १३५

१० आपणेषु वाणिज्यां हट्टेषु विहारेषु पूर्णांमल्लक्रीडास्थानेषु समाजेषु महाजनसमुदायेषु ११ आरामेषु पुरवाटिकासु उद्यानेषु वी-
ह्रिवाटिकासु देशेषु आकारस्थानेषु चत्वरेषु अथिकारिणां उपवेशनस्थाने सभासु राजसंसत्सु आवसथेषु तत्रतत्र महतांगृहेषु

पुरे जनपदे चैव तथा सामंतराजसु यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते १० चारांश्च विद्या-
त्प्रहितान्परेण भरतर्षभ आपणेषु विहारेषु समाजेषु च भिक्षुषु ११ आरामेषु तथोद्यानेषु पंडि-
तानां समागमे देशेषु चत्वरे चैव सभासु आवसथेषु च १२ एवं विचिनुयाद्राजा परं विचक्षणः चारे-
हि विदितं पूर्वं हितं भवति पांडव १३ यदा तु हीनं नृपतिर्विद्यादात्मनमात्मना अमात्यैः सह संमंत्र्य
कुर्यात्संधिं बलीयसा १४ आज्ञायमाने हीनत्वे संधिं कुर्यात्परेण वै लिप्सुर्वा कंचिदेवार्थं त्वरमा-
णो विचक्षणः १५ गुणवंतो महोत्साहा धर्मज्ञाः साधवश्च ये संदधीत नृपस्तैश्च राष्ट्रं धर्मेण पाल-
यन् १६ उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्व-
शः १७ यो नोपकर्तुं शक्नोति नापकर्तुं महीपति न शाक्यमुपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् १८

१२ विचिनुयात् १३ १४ १५ नैर्बल्यभूतैः तान् द्वारीकृत्य संदध्यात् बलवद्भिर्नृपैः सह संधिं कुर्यात् १६ पूर्वापकारिणः पूर्वं दृष्टा
इति अपकृताः पश्चात् दयया अनुगृहीताः ते पूर्वापकारवंतस्तान् १७ तत्रापि विशेषमाह य इति १८

यात्रायां यदि स्वच्छास्यात् तर्हि दुर्बलत्वादिना विज्ञातं शत्रुं प्रत्येव यात्रामात्रापयेदित्युत्तरेण संबंधः यात्रां यायादविज्ञातमिति पाठे दुर्बलं
शत्रुमुद्दिश्य तेनाविज्ञातं यथास्यात्तथा यात्रां यायादिति योजना अनाक्रंदं मित्रहीनं अनंतरं बंधुजनहीनं व्यासक्तं अन्येन युद्धं कुर्वाणं
प्रमत्तं अनवहितं १९ विधानं रक्षणारक्षणादि सामग्रीसंपादनं २० कर्षयन् वीर्यवंतं तत्परः कर्षणपरः २१ कर्षणमेवाह राष्ट्रं चेति

यात्रायां यदि विज्ञातमनाक्रंदमनंतरं व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः १९ यात्रामात्रा
पयेद्धीरः कल्यः पुष्टबलः सुखी पूर्वं कृत्वा विधानं च यात्रायां नगरेत्तथा २० न च वश्यो भवेद
स्यान्यो यश्चातिवीर्यवान् हीनश्च बलवीर्याभ्यां कर्षयंस्तं परो वसेत् २१ राष्ट्रं च पीडयेत्तस्य
शस्त्राग्निविषमूर्छनैः अमात्यवल्लभानां च विवादांस्तस्य कारयेत् २२ वर्जनीयं सदा युद्धं राज्य
कामेन धीमता उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः २३ सांत्वेन तु प्रदानेन भेदेन च नराधि
प यमर्थं शक्नुयात्साध्यं तेन तद्ध्येत पंडितः २४ ॥

कारयेत् भृत्यादिद्वारा २२ २३ बलिनो राष्ट्रकर्षणे दुर्बलस्ततः सांत्वेनार्थयेत् यावत्साध्यं शक्नुयात्तेन तद्ध्येत् भवद्भिर्मत्तो वार्षिकः क
रो न ग्राह्यो मया च भवतां राष्ट्रं नोपद्रष्टव्यमिति सांत्वं महाग्रामद्वयं तेनाद्य शामिष्यत्युक्त्वा अर्थप्रदानं भेदेन राजामात्यान् भेदयित्वा राज्ञः
स्वोपरि प्रयाणस्य विघ्नादिकं वा कर्तव्यमित्यादिना हीनः प्रबलेन सह दैवं वर्तेत संग्रामं विना एवं उपायत्रयेण स्वार्थं साधयेदित्यर्थः २४

प्रजाभ्यःस्वाभ्यः २५ दशधर्मगताःमत्तोन्मत्तादयःतेभ्यःदंडेभ्योयद्वसुग्राह्यंतत्पौराणांरक्षणायभवतिप्रदंडितास्तेपुनर्बाधेरन्निति भा-
वः २६ भक्तिःस्वीयत्वेनस्नेहःपक्षाश्रुपरि २७ व्यवहारेषुअर्थिप्रत्यर्थिवाक्यविचारेषुराजाप्राज्ञान्पंडितान्न्यसेत् २८ आकरेस्वर्णादिउ-

आददीतबलिंचापिप्रजाभ्यःकुरुनंदन सषड्भागमपिप्राज्ञस्तासामेवाभिगुप्तये २५ दशधर्मगते-
भ्योयद्वसुबह्वल्पमेवच तन्नाददीतसहसापौराणांरक्षणायवै २६ यथापुत्रास्तथापौराद्रष्टव्या-
स्तेनसंशयः भक्तिश्चैषांनकर्तव्याव्यवहारेप्रदर्शिते २७ श्रोतुंचैवन्यसेद्राजाप्राज्ञान्सर्वार्थदर्शि-
नः व्यवहारेषुसततंतत्रराज्यंप्रतिष्ठितं २८ आकरेलवणेशुल्केतरेनागबलेतथा न्यसेदमात्या-
न्नृपतिःस्वाप्तान्वापुरुषान्हितान् २९ सम्यग्दंडधरोनित्यंराजाधर्ममवाप्नुयात् राज्ञोहिसततंदं-
डःसम्यग्धर्मःप्रशस्यते ३० वेदवेदांगवित्प्राज्ञःसुतपस्वीनृपोभवेत् दानशीलश्चसततंयज्ञशी-
लश्चभारत ३१ एतेगुणाःसमस्ताःस्युर्नृपस्यसततंस्थिराः व्यवहारलोपेनृपतेःकुतःस्वर्गःकुतोय-
शः ३२ यदातुपीडितोराजाभवेद्राज्ञाबलीयसा तदाभिसंश्रयेद्दुर्गंबुद्धिमान्पृथिवीपतिः ३३ वि-
धायाक्रम्यमित्राणिविधानमुपकल्पयेत् सामभेदान्विरोधार्थंविधानमुपकल्पयेत् ३४ घो-
षान्न्यसेतमार्गेषुग्रामानुत्थापयेदपि प्रवेशयेच्चतान्सर्वान्शाखानगरकेष्वपि ३५ ॥

त्पत्तिस्थानेलवणेतदुत्पत्तिस्थानेशुल्केधान्यादिविक्रयस्थाने तरेनदीसंतरणे नागबलेपत्तेषुआयव्ययविचारार्थममात्यान्न्यसेत् २९ ३४
घोषान्वनस्थान्मार्गेषुराजपथेषुन्यसेत् शाखानगराणिमहानगरस्योपनगराणि ३५ ॥

येदिति यन्त्रिकादीन्दुर्गेषुप्रवेशयेदित्यर्थः ३६ अतिहारंसमीपमानयन्तं दहेत्परेषांतन्माभूदिति ३७ उपजपेत्भेदयित्वातद्द्वारादाहयेत्
३८ संक्रामान्अवतरणार्थान्सेतून् जलंतडागादिस्थंविस्रावयेत् नद्योर्गेयंवापीकूपादिस्थंविषादिनानाशयेत् ३९ तदात्वेनवर्त्तमान
कालेआयतीभिःउत्तरकालेषुच अपवर्गात्तृतीया सर्वदामित्रकार्यउपस्थितेपितद्विहायेत्यर्थात्आजौपरस्यशत्रोःप्रतीघातंदत्तारभूम्या।

येयुक्ताश्चैवदुर्गांश्चदेशान्तेषुप्रवेशयेत् यन्त्रिणोबलमुख्यांश्चसंमान्यपित्तापुत्रःपुनः तस्याभिहारं
कुर्याच्चस्वयमेवनराधिपः असंभवेप्रवेशस्यदहेद्दावाग्निनाभृशं ३७ तेत्रस्थेषुचमत्स्येषुशत्रो।
रुपजपेन्नरान् विनाशयेद्वातत्सर्वंबलेनाथस्वकेनवा ३८ नदीमार्गेषुचतथासंक्रमानवसाद
येत् जलंविस्रावयेत्सर्वमविस्राव्यंचदूषयेत् ३९ तदात्वेनायतीभिश्चनिवसेद्भूम्यनन्तरं प्रति
घातंपरस्याजौमित्रकार्येप्युपस्थिते ४० दुर्गाणांचाभितोराजामूलच्छेदंप्रकारयेत् सर्वेषांच
क्षुद्रवृक्षाणांचैत्यवृक्षान्विवर्जयेत् ४१ प्रवृद्धानांचवृक्षाणांशाखाःप्रच्छेदयेत्तथा चैत्यानांस
र्वथात्याज्यमपिपत्रस्यपातनं ४२ ॥

नंतरंनिकटदेशवासिनंतच्छत्रुमाश्रित्यनिवसेत् अयमर्थः स्वराष्ट्रेयन्मुख्यंस्थानंतदाक्रम्यवसन्शत्रोःशत्रुभिःसर्वदास्नेहंकृत्वातद्ब
लेनशत्रून्स्वराष्ट्राद्दूरीकुर्यादिति ४० दुर्गाणामन्तर्बहिर्दुर्गाणांपरेषामाश्रयोमाभूदितिमूलच्छेदंकुर्यात् ४१ ४२ ॥

प्रगंडीः कारयेत्सम्यक् षाड्गुण्यं सत्रिवर्गकं यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमामिति प्रश्नं वा पाठः तस्मात्त्वयानेन च तदीयमेव संचारोय
त्र लोकानां हृद्यादेवावबुध्यते प्रगंडीस्सा च वित्तेया बहिः प्राकारसंतिता श्रीणिपिरत्तत्र यत्नेन कर्त्तव्यो भूतिमिच्छता सएवाकाशे यत्र लोका
रतीति स्तूच्यते शास्त्रकोविदैरिति तास्यतदिङ्कारयेदित्यर्थः षाड्गुण्यं संधिविग्रहादि त्रिवर्गः स्थानवृद्धिक्षयरूपो वा अरिमित्रोदासीनरूपो
वा मंत्रोत्साहप्रभुशक्तिरूपो वा भूमिमित्रहिरण्यादिरूपो वा धर्मार्थकामरूपो वा उत्तरार्द्धार्थः स्पष्टः प्रगंडीः दुर्गप्राकारभित्तौ शूराणां सुप्रवेश

प्रगंडीः कारयेत्सम्यगाकाशजननींतदा आपूरयेच्च परिखाः स्थाणुनक्रझषाकुलाः ५३ सं
कटद्वारकाणि सूक्ष्माणि सार्थे पुरस्य च तेषां च द्वाररक्षाभिः कार्या सर्वात्मना भवेत् ५४ द्वारेषु
च गुरूण्येव यंत्राणि स्थापयेत्सदा आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ५५ काष्ठा
नि चाभिहार्याणि तथा कूपांश्च खानयेत् संशोधयेत्तथा कूपान्कृतान्पूर्वान्पयोऽर्थिभिः ५६ तृणा
च्छन्नानि वेश्मानि पंकेनाथ प्रलेपयेत् निर्हरेच्च तृणं मासि चैत्रे वह्निभयात्तथा ५७ नक्तमेव
च भक्तानि पाचयेत नराधिपः न दिवाज्वालयेदग्निं वर्जयित्वाग्निहोत्रिकं ५८ ॥

स्थानानि आकाशजननीः तत्रैव चपकपत्रायां भित्तौ तत्रत्यानां रक्षणाभूतायां बाह्यार्थदर्शनार्थानि लघुच्छिद्राणि यद्वारा आग्नेयास्त्रगु
लिकाः प्रक्षिप्यंते स्थाणवः सशूलाः येषु पतन विदीर्यंते नक्रैर्वा भक्ष्यते ५३ संकटद्वारकाणि सूक्ष्मद्वाराणि तेषां च द्वाररक्षगुप्तिः का
र्या तेषां चाचाररक्षगुप्तिरिति पाठे आचाररक्षिः शिष्टैर्गुप्तिः कार्या ५४ ५५ ५६ ५७ ५८ ॥

कर्म्मारः लोहकारादितच्छाला अरिष्टं सूतिकागृहं तद्रूपास्तु शालास्तु अन्तर्विधेयो आच्छादितः कर्तव्यः ४९ महादंडोवधः ५० चाक्रि
कान्शाकटिकान् कुशीलवान्फाललेखानकीनाशानितियावत् ५१ तीर्थेषु मंत्र्यादिषु अष्टादशसु प्राग्व्याख्यातेषु ५२ ५४ प्रतोलीर

कर्म्मारविष्टशालास्तु ज्वलेदग्निः स्वरन्तितः गृहाणि च प्रवेश्यांत विधेयः स्याद्धुताशनः ४९ महादं
डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् प्रबोधयेद्रथैवं च रक्षणार्थं पुरस्य च ५० भित्तकांश्चाक्रिकांश्चै
वक्लीबोन्मत्तान्कुशीलवान् बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हितेन्यथा ५१ चत्वरेषु च तीर्थेषु सभा
स्वावसथेषु च यथार्थवर्णप्रणिधिं कुर्यात्सर्वेषु पार्थिवः ५२ विशालान्राजमार्गांश्च कारयीत नरा
धिपः प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ५३ भांडागारान्युधागारान्योधागारांश्च सर्व
शः अश्वागारान्गजागारान्बलाधिकरणानि च ५४ परिखाश्चैव कौरव्य प्रतोलीर्निष्कुटानि च न
जात्वन्यः प्रपश्येत गुह्यमेतद्युधिष्ठिर ५५ अर्थसंनिचयं कुर्याद्राजा परबलार्दितः तैलं वसामधुघृता
मौषधानि च सर्वशः ५६ अंगारकुशमुंजानां पलाशशरवर्णिनां यवसेंधनदिग्धानां कारयीत च सं
चयान् ५७ आयुधानां च सर्वेषां शक्त्यृष्टिप्रासवर्मणां संचयानेवमादीनां कारयीत नराधिपः ५८

थ्यानिष्कुटानि गृहारामाः ५५ वर्णिनां लेखकानां वर्णी स्याल्लेखके चित्रकरेपि ब्रह्मचारिणीति मेदिनी यवसं घासः दिग्धानां विषाक्तबा
णानां दिग्धो विषाक्तबाणे स्यादिति मेदिनी ५६ ॥

चतुर्विधान् विषशल्यरोगाक्रान्त्याहरान् ५८ ६१ अस्थाने कोपेन परस्य निर्वेदस्ताऽनेन वा कृतं चेत् दानमानादिना पुनस्तत्प्रशमी कर्त्तव्यमित्याह
निर्वेदयित्वेति ६२ ६५ संधानासनं संधिं कृत्वावस्थितिः यात्रासंधानं यानं ६६ विगृह्य वैरं कृत्वावस्थानं विग्रहः यात्रां संपरिगृह्य आसनं श

औषधानि च सर्वाणि मूलानि च फलानि च चतुर्विधांश्च वैद्यान्वै संगृह्णीयाद्विशेषतः ५९ नटा
श्च नर्तकाश्चैव मल्ला मायाविनस्तथा शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ६० यतः शंका भवेच्चा
पि भृत्यतो वापि मंत्रितः पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयीत तान् ६१ कृते कर्मणि राजेन्द्र पूजये
द्धनसंचयैः दानेन च यथार्हेण सांत्वेन विविधेन च ६१ निर्वेदयित्वा तु परं हत्वा वा कुरुनंदन ततो ऽ
नृणो भवेद्राजा यथा शास्त्रनिदर्शितं ६२ राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे आत्मामात्या
श्च कोशश्च दंडो मित्राणि चैव हि ६३ तथा जनपदश्चैव पुरं च कुरुनंदन एतत्सप्तात्मकं राज्यं परि
पाल्यं प्रयत्नतः ६४ षाड्गुण्यं च त्रिवर्गं च त्रिवर्गमपरं तथा यो वेत्ति पुरुषव्याघ्र स भुंक्ते पृथिवीमिमां
६५ षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर संधानासनमित्येव यात्रासंधानमेव च ६६ विगृ
ह्यासनमित्येव यात्रां संपरिगृह्य च द्वैधीभावस्तथान्येषां संश्रयोऽथ परस्य च ६७ ॥

त्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थाने ऽवस्थानं द्वैधीभावः उभयत्र संधिकरणं अन्यस्य आश्रयो दुर्गादेर्महाराजस्य वा ६७ ॥

६८ ७२ अत्राध्यायकेचित्समापयंति दंडेति इदंद्वयंसमस्तंव्यस्तंवातत्रकेनकस्यकिंक्रियतइतिप्रश्नत्रय ७३ दंडनीत्याःसकाशात्राज्ञःप्रजा
नांचयत्महाभाग्यंतत्शृणु ७४ तत्रदंडनीत्याराजास्वर्गादिकंप्राप्नोतिराज्ञाचदंडनीतिःकृतादीन्जनयति तावुभौचप्रजानांक्षेमंजनय

त्रिवर्गश्चापियःप्रोक्तस्तमिहैकमनाःशृणु॥ क्षयःस्थानंचवृद्धिश्चत्रिवर्गःपरमस्तथा ६८ धर्म
श्चार्थश्चकामश्चसेवितव्योथकालतः धर्मेणैवमहीपालश्चिरंपालयतेमही ६९ अस्मिन्नर्थेचश्लो
कौद्वौगीतावंगिरसास्वयं यादवीपुत्रभद्रंतेतावपिश्रोतुमर्हसि ७० कृत्वासर्वाणिकार्याणिसम्या
क्संपाल्यमेदिनी पालयित्वातथापौरान्परत्रसुखमेधते ७१ किंतस्यतपसाराज्ञःकिंचतस्याध्वरै
रपि सुपालितप्रजोयःस्यात्सर्वधर्मविदेवसः ७२ युधिष्ठिरउ० दंडनीतिश्चराजाचसमस्तौ
तावुभावपि कस्यकिंकुर्वतःसिद्धैतन्मेब्रूहिपितामह ७३ भीष्मउ० महाभाग्यंदंडनीत्याःसिद्धैः
शब्दैःसहेतुकैः शृणुमेशंसतोराजन्यथावदिहभारत ७४ दंडनीतिःस्वधर्मेभ्यश्चातुर्वर्ण्यंनिय
च्छति प्रयुक्तास्वामिनासम्यगधर्मेभ्योनियच्छति ७५ चातुर्वर्ण्येस्वकर्मस्थेमर्यादानामसंक
रेदंडनीतिकृतेक्षेमेप्रजानामकुतोभये ७६ सोमेप्रयत्नंकुर्वंतित्रयोवर्णायथाविधि तस्माद्देवम
नुष्याणांसुखंविद्धिसमाहितं ७७ ॥

तःइत्युत्तरमाह दंडनीतिरित्यादिना स्वधर्मेभ्यःस्वधर्मार्थं
करोतइत्येते मे ७६ सोमेसोमस्यानिमित्तं तस्मात्क्षेमात्वर्णासंकरात् ७७ ॥

अधर्मेभ्यइतिपंचमी ७५ असं

श्री०
शां०रा०
टी०
१३९

७८ ७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ अशुभस्यअधर्मस्य ८७ ८८ ८९ अयोगेनअनुपायेन ९० ॥

कालोवाकारणंराजावाकालकारणं इतितेसंशयोमाभूद्राजाकालस्यकारणं ७८ दंडनीत्या
यदाराजासम्यक्कार्त्स्न्येनवर्त्तते तदाकृतयुगंनामकालःश्रेष्ठःप्रवर्त्तते ७९ ततःकृतयुगेधर्मो
नाधर्मोविद्यतेक्वचित् सर्वेषामेववर्णानांनाधर्मेरमतेमनः ८० योगक्षेमाःप्रवर्त्तन्तेप्रजानांनात्र
संशयः वैदिकानिचसर्वाणिभवंत्यपिगुणान्युत ८१ ऋतवश्चसुखाःसर्वेभवंत्युतनिरामयाः
प्रसीदंतिनराणांचस्वरवर्णमनांसिच ८२ व्याधयोनभवंत्यत्रनाल्पायुर्दृश्यतेनरः विधवानभवं
त्यत्रनृशंसोनाभिजायते ८३ अकृष्टपच्यापृथिवीभवंत्योषधयस्तथा त्वक्पत्रफलमूलानि
वीर्यवंतिभवंतिच ८४ नाधर्मोविद्यतेतत्रधर्मएवतुकेवलं इतिकार्तयुगानेतान्धर्मान्विद्धियुधि
ष्ठिर ८५ दंडनीत्यायदाराजात्रीनंशाननुवर्त्तते चतुर्थमंशमुत्सृज्यतदात्रेताप्रवर्त्तते ८६ अशुभ
स्यचतुर्थांशस्त्रीनंशाननुवर्त्तते कृष्टपच्यैवपृथिवीभवंत्योषधयस्तथा ८७ अर्द्धंत्यक्त्वायदारा
जानीत्यर्धमनुवर्त्तते ततस्तुद्वापरंनामसकालःसंप्रवर्त्तते ८८ अशुभस्ययदात्वर्धेद्वावंशावनु
वर्त्तते कृष्टपच्यैवपृथिवीभवत्यल्पफलातदा ८९ दंडनीतिंपरित्यज्ययदाकार्त्स्न्येनभूमिपः
प्रजाःक्लिश्नात्ययोगेनप्रविशंतितदाकलिः ९० ॥

९१ ९२ ९३ ९४ ९५ ९६ चतुर्थस्यकलेः ९७ ९८ ९९ ९० ९१ सीमंतकरीव्यवस्थापिका ९२ ९३ ॥

कलावधर्मोभूयिष्ठंधर्मोभवतिनक्वचित् सर्वेषामेववर्णानांस्वधर्माच्च्यवतेमनः ९१ शूद्राभैक्षे
णजीवंतिब्राह्मणाःपरिचर्यया योगक्षेमस्यनाशश्चवर्त्ततेवर्णसंकरः ९२ वैदिकानिचकर्मा
णिभवंतिविगुणान्युत ऋतवोनसुखाःसर्वेभवंत्यामयिनस्तथा ९३ ह्रसंतिचमनुष्याणां
स्वरवर्णमनांस्युत व्याधयश्चभवंत्यत्रम्रियंतेचगतायुषः ९४ विधवाश्चभवंत्यत्रनृशंसाजायते
प्रजा क्वचिद्वर्षतिपर्जन्यःक्वचित्सस्यंप्ररोहति ९५ रसाःसर्वेक्षयंयांतियदानेच्छतिभूमिपः प्र
जाःसंरक्षितुंसम्यग्दंडनीतिसमाहितः ९६ राजाकृतयुगस्रष्टात्रेतायाद्वापरस्यच युगस्यचच
तुर्थस्यराजाभवतिकारणं ९७ कृतस्यकरणाद्राजास्वर्गमत्यंतमश्नुते त्रेतायाःकरणाद्राजास्व
र्गंनात्यंतमश्नुते ९८ प्रवर्त्तनाद्वापरस्ययथाभागमुपाश्नुते कलेःप्रवर्त्तनाद्राजापापमत्यंतमश्नुते
९९ ततोवसतिदुष्कर्मानरकेशाश्वतीःसमाः प्रजानांकल्मषेमग्नोऽकीर्त्तिंपापंचविंदति ९० दं
डनीतिंपुरस्कृत्यविजानन्क्षत्रियःसदा अनवाप्तंचलिप्सेतलब्धंचपरिपालयेत् ९१ लोकस्यसी
मंतकरीमर्यादालोकभाविनी सम्यङ्नीतादंडनीतिर्यथामातायथापिता ९२ यस्यांभवंतिभूता
नितद्विद्धिमनुजर्षभ एषएवपरोधर्मोयद्राजादंडनीतिमान् ९३ ॥

श्री॰
शां॰रा॰
टी॰
९४॰

९४ नवषष्टितमः ६९ केनदंडनीतिसम्यक्प्रयोज्यकेनवृत्तेनवर्त्तेतेतिप्रश्नः १ षट्त्रिंशत्पतत्संख्याकोधर्मचर्यादिगुणगणः स
चप्रत्येकंएकैकगुणयोगात्षट्त्रिंशद्गुणैःअकटुकतादिभिःसंयुतः अतएवगुणोपेतःयान्गुणान्धर्मादीन्गुणंकल्याणंअवाप्नुयात्
सोयंषट्त्रिंशत्कोगणस्त्वयाश्रोतव्यइत्यर्थः २ अकटुकःरागद्वेषहीनःधर्मान्सर्वान्आचरेत् १ ननास्तिकःपरलोककामुकःसन्स्नेहं

तस्मात्कौरव्यधर्मेणप्रजाःपालयनीतिमान् एवंवृत्तःप्रजारक्षन्स्वर्गंजेतासिदुर्जयं ९४
इतिश्रीमहाभारतेशान्तौराजधर्मे ६९ युधिष्ठिरउ॰ केनवृत्तेनवृत्तज्ञवर्त्तमानोमहीपतिः सु
खेनार्थान्सुखोदर्कानिहचप्रेत्यचाप्नुयात् १ भीष्मउ॰ अयंगुणानांषट्त्रिंशत्षट्त्रिंशद्गुणसं
युतः यान्गुणांस्तुगुणोपेतःकुर्वन्गुणमवाप्नुयात् २ चरेद्धर्मानकटुकोमुंचेत्स्नेहंनना
स्तिकः अनृशंसश्चरेदर्थंचरेत्काममनुद्धतः ३ प्रियंब्रूयादकृपणःशूरःस्यादविकत्थनः दा
तानापात्रवर्षीस्यात्प्रगल्भःस्यादनिष्ठुरः ४ संदधीतनचानार्यैर्विगृह्णीयान्नबंधुभिः ना
भक्तंचारयेच्चारंकुर्यात्कार्यमपीडया ५ ॥

कुर्यात्नतुलोभादिना २ अनृशंसःअनिष्ठुरःसन्नर्थमर्जयेत् ३ अनुद्धतःधर्मार्थाविनाशयन्कामंइंद्रियप्रीतिंचरेत् ३ ४ अकृ
पणःअदीनः ५ अविकत्थनःश्लाघाहीनः ७ अनिष्ठुरःसदयः ८ ४ आर्यंत्वजानन्संधिंकुर्यात् बंधुंत्वजानन्विग्रहंनकुर्या
दितिसर्वत्रगुणोपेतोगुणोद्रष्टव्यः ९ अभक्तंअल्पान्नंपुष्कलान्नदश्चारान्कुर्यात् ११ अपीडयन्भक्तंदद्यात् १२ ॥ ५ ॥

साधुत्वेनपरीक्ष्यार्थप्रयोजनंब्रूयात् १३ श्रोतारउपदेक्ष्यंतीतिज्ञात्वाआत्मनोगुणान्नब्रूयात् १४ १५ १६६ चोक्तःक्षुद्रः २२ २८ २९ प्रणयंनश्नंतीहित्वाहितेतियान्नोक्तं २९ ३० नचमोक्षायफलंदित्सन्नेवसांत्वयेदित्यर्थः ३१ ३२ ९ अविज्ञायधात्रदोषंचेतिशेषः ३३

अर्थंब्रूयान्नचासत्सुगुणान्ब्रूयान्नचात्मनः आदद्यान्नचसाधुभ्योनासत्पुरुषमाश्रयेत् ६ नापरीक्ष्यनयेद्दंडंनचमंत्रंप्रकाशयेत् विसृजेन्नचलुब्धेभ्योविश्वसेन्नापकारिषु ७ अनीर्षुर्गुप्तदारःस्याच्चोक्षःस्यादघृणीन्नृपः स्त्रियःसेवेतनात्यर्थंमृष्टंभुंजीतनाहितं ८ अस्तब्धःपूजयेन्मान्यान्गुरून्सेवेदमायया अर्चेद्देवानदंभेनश्रियमिच्छेदकुत्सितां ९ सेवेतप्रणयंहित्वादक्षःस्यान्नत्वकालवित् सांत्वयेन्नचमोक्षायअनुगृह्णन्नचाक्षिपेत् १० प्रहरेन्नत्वविज्ञायहत्वाशत्रून्नशोचयेत् क्रोधंकुर्यान्नचाकस्मान्मृदुःस्यान्नापकारिषु ११ एवंचरस्वराज्यस्थोयदिश्रेयइहेच्छसि अतोन्यथानरपतिर्भयमृच्छत्यनुत्तमं १२ इतिसर्वान्गुणानेतान्यथोक्तान्योनुवर्तते अनुभूयेहभद्राणिप्रेत्यस्वर्गेमहीयते १३ वैशंपायनउ० इदंवचःशांतनवस्यशुश्रुवान्युधिष्ठिरःपांडवमुख्यसंवृतः तदाववंदेचपितामहंनृपोयथोक्तमेतच्चचकारबुद्धिमान् १४ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मेषु ७०

नशोचयेत्शत्रुवधूनांशोकंअपनुदेत् ३४ अकस्मात्कारणंविना ३५ ३६ अनुत्तमंमहत्तरं १२
१३ पांडवमुख्यैः पांडुपुत्रैर्भीमादिभिर्वृतःसंवृतोयुक्तः १४ सप्ततितमः ७० ॥